देवलः" । एकोद्दिष्टेतिकर्त्तव्यत्वात् सांवत्सरिकं श्राद्धमपि एकोद्दिष्टशब्देन शास्त्रे व्यवह्रियते । "एकोद्दिष्टं सुता दश" "एकोद्दिष्टं न पार्व्वणम्" इति च स्मृत्योः सांवत्सरिकेऽपि तथा प्रयोगात् ।

एकोद्दिष्टाधिकारिणस्तु निर्ण०सि०दर्शिताः यथा "चन्द्रिकायां सुमन्तुः "मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः । पैतृमेधिकसंस्कारं मन्त्रार्च्चकमादृतः" । तत्रैव हेमाद्रौ शङ्खः "पितुः पुत्त्रेण कर्त्तव्या पिण्डदानोदकक्रिया । पुत्त्राभावे तु पत्नी स्यात्तदभावे तु सोदरः । अत्र पुत्त्रपदं यद्यपि क्षेत्रजादिद्वादशविधपुत्त्रपरम् । ते च द्वादशपुत्त्रा याज्ञवल्क्येनोक्ताः "औरसो धर्म्मपत्नीजस्तत्समः पुत्त्रिकासुतः । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा । गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः । कानीनः कन्यकाजातो मातामहसुतो मतः । अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः । दद्यान्माता पिता वा यं स पुत्त्रो दत्तको भवेत् । क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः । दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः । उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः । पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः" । इति तथापि "दत्तौरसेतरेषां तु पुत्त्रत्वेन परिग्रहः" इति हेमाद्रावादित्यपुराणे कलावितरेषां पुत्त्रत्वनिषेधाद्दौरसदत्तपरमेव । यद्यपि "पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः" इति याज्ञवल्क्योक्तेरौरसाभावे दत्तकप्राप्तिस्तथाप्यौरसाभावे पौत्त्रः प्रपौत्त्रस्तदभावे दत्तकादय इति ज्ञेयम् । "पुत्त्रेण लोकान् जयति पौत्त्रेणानन्त्यमश्नुते" इति "अथ पुत्त्रेण पौत्त्रेण ब्रध्नस्याप्नोति विष्टपमिति" जीमूतवाहनधृतहारीतवसिष्ठशङ्खलिखितोक्तेः "लोकानन्त्यं दिवः प्राप्तिः पुत्त्रपौत्त्रप्रपौत्त्रकैरिति" याज्ञवल्क्योक्तेश्च । "पुत्त्रः पौत्त्रश्च तत्पुत्त्रः पुत्त्रिकापुत्त्र एव च । पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा । भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा । असन्निधाने पूर्व्वेषामुत्तरे पिण्डदाः स्मृताः" इति स्मृतिसंग्रहे प्रपौत्त्रानन्तरं पुत्त्रिकापुत्त्रोक्तेस्तत्समत्वाच्च दत्तकस्य । यद्यपि वृहस्पतिना "पौत्त्रश्च पुत्त्रिकापुत्त्रः स्वर्गप्राप्तिकरावुभौ । रिक्थे च पिण्डदाने च समौ तौ परिकीर्त्तिताविति" पौत्त्रसाम्यमुक्तम् । याज्ञवल्क्येन च "औरसो धर्म्मपत्नीजस्तत्समः पुत्त्रिकासुतः" इत्यौरससाम्यमुक्तम् तथापि लोके राजसमो मन्त्रीत्यादौ किञ्चिन्न्यूने समशब्दप्रयोगाद्गौण-

मुख्ययोः साम्यायोगाच्च स्तुत्यर्थत्वात् न तु समविकल्प इति भावितव्यम् । "पुत्त्रः पौत्त्रः प्रपौत्त्रो वा भ्राता वा भ्रातृसन्ततिः । सपिण्डः सन्ततिर्व्वापि क्रियार्हो नृप ! जायते । एषामभावे सर्व्वेषां समानोदकसन्ततिः । मातृपक्षः सपिण्डेन सम्बद्धो यो जलेन वा । कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृप ! । तत्सङ्घातान्तर्गतैर्व्वापि तत्‌क्रियाभ्यः कारयेन्नृपः" इति विष्णुपुराणाच्च प्रपौत्त्रानन्तरं दत्तकादयः इति पृथ्वीचन्द्रमदनरत्नकालादर्शादयः । मदनपारिजातेऽप्येवम् । बोपदेवकल्पधरादयस्तु "पुत्त्रेषु विद्यमानेषु नान्यौ वै कारयेत् स्वधाम्" इति सुमन्तूक्तेः "पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति । पौत्त्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् । नैतत् पौत्त्रेण कर्त्तव्यं पुत्त्रवांश्चेत्पितामहः" इति छन्दोगपरिशिष्टे च पुत्त्रशब्दस्य द्वादशविधसुतपरत्वात् पूर्व्वाभावे परः पर इत्यस्यानन्यपरत्वाच्च दत्तकाद्यभावे पौत्त्रादीनामधिकार इत्याहुः । अतएव निषेधादुपनीतपौत्त्रसत्त्वेऽप्यनुपनीतपुत्त्रस्यैवाधिकारः । औरसस्याप्यनुपनीतोऽपि कुर्य्यादित्याह पृथ्वीच० सुमन्तुः । "श्राद्धं कुर्य्यादवश्यं तु प्रमीतपितृकोद्विजः । व्रतस्थो वाऽव्रतस्थो वा एकएव भवेद्यदि" वृद्धमनुः । "कुर्य्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः । पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः" मनुः "नह्यस्मिन् युज्यते कर्म्म किञ्चिदामौञ्जिबन्धनात्" । सुमन्तुरपि नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी निबध्यते । मन्त्राननुपनीतोऽपि पठेदेक औरसः" । ब्रह्म वेदम् मन्त्रपाठस्त्रिवर्षकृतचूडस्यैव । "अनुपेतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम् । यद्यसौ कृतचूड़ः स्याद्यदि स्याच्च त्रिवत्सरः" इति सुमन्तूक्तेः । यत्तु व्याघ्रः "कृतचूड़स्तु कुर्वीत उदकं पिण्डमेव च । स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेदिति" यच्च स्मृतिसंग्रहे "कृतचूड़ोऽनुपेतश्च पित्रोः श्राद्धं समाचरेत् । उदाहरेत् स्वधाकारं न तु वेदाक्षराण्यसाविति" । तत्प्रथमवर्षचूड़ाविषयमिति माधवमदनरत्नपृथ्वीचन्द्राः । त्रिवर्षोर्द्ध्वं मन्त्रवत्त्वस्य विकल्प इति चन्द्रिका बोपदेवश्च । मदनरत्ने स्मान्दे । "यत्रेषु मन्त्रवत्कर्म पत्नी कुर्य्याद्यथा नृप ! । तथौर्द्ध्वदैहिकं कर्म कुर्य्यात् सा धर्म्मसंस्कृता" । अयत्नौ तु कात्यायनः । "असंस्कृतेन पत्न्या च अग्निदानं समन्त्रकम् । कर्त्तव्यमितरत्सर्वं कारयेदन्यमेव हि" । पुत्त्रश्च न जन्मतोऽधिकारी किन्तु वर्षोत्तरमिति कालादर्शः "चौलाद्याविद-

कादशाहं न कुर्य्यात् पितृमेधिकम्” इत्युक्तेः । मदनरत्ने सुमन्तुरपि “पुत्त्रस्योत्पत्तिमात्रेण संस्कुर्य्यादग्निमोचनात् । पितरं नाविद्काञ्चौलात्पितृमेधेन कर्म्मणा” । एतच्चौरसस्यैव दत्तकादीनां तूपनीतानामेवाधिकारः इति कालादर्शः । पृथ्वीच० स्कान्दे “पितुरनुपनीतोऽपि विदध्यादौरसः सुतः । और्द्ध्वदैहिकमन्ये तु संस्कृताः श्राद्धकारिणः” इति । अन्यत्रापि दर्शमहालयादावनुपनीतस्याधिकारोऽस्माभिः पूर्व्वमुक्तः । सपौत्राभावे दत्तकादयो द्वादश पुत्त्राः । तदभावे भर्त्तुः पत्नी तस्याश्च सः “अपुत्त्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत चेति” वृद्धमनूक्तेः । “भार्य्यापिण्डं पतिर्दद्याद्भर्त्तुर्भार्य्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः” इति । पुत्त्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः” इति च हेमाद्रौ शङ्खोक्तेः । देवयाज्ञिकस्तु ‘कानीनगूढसहजपुनर्भूतनयाश्च ये । पत्न्यभावेऽपि कुर्य्युस्ते अप्रशस्ताः स्मृताः हि ते’ इति स्मृतिसंग्रहात् पत्न्यभावे कानीनादय इत्याह । पत्युरपि सपत्नीपुत्त्रे सति नाधिकारः । “पितृपत्न्यः सर्व्वा मातरः” इति सुमन्तूक्तेः । ‘विदध्यादौरसः पुत्त्रो जनन्या और्द्ध्वदैहिकम् । तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा सुताः । तेषामभावे स्वपतिस्तदभावे सपिण्डकाः” इति मदनरत्ने कात्यायनोक्तेः । “बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः । एका चेत्पुत्त्रिणी तासां सर्व्वासां पिण्डदस्तु सः” इति बृहस्पतिवचनाच्च । अपरार्कोऽप्येवम् । तेन यच्छ्राद्धविवेके उक्तम् “सत्यपि सपत्नीपुत्त्रे पत्युरेवाधिकार इति तन्निरस्तम् । यच्च तत्रैव कात्यायनः “न भार्य्यायाः पतिर्दद्यादपुत्त्राया अपि क्वचित्” । यच्च विष्णुपु० “कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृपेति” । यच्च मार्क० पु० “सर्व्वाभावे स्त्रियः कुर्य्युः स्वभर्त्तॄणाममन्त्रकमिति” । तदासुरादिविवाहोढाविषयम् “धर्म्मविवाहैरूढा या सा पत्नी परिकीर्त्तिता । क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते । न सा दैवे न सा पित्र्ये दासीं तां मुनयो विदुरिति” माधवीये शातातपोक्तेः । यत्तु शुद्धिरत्नाकरः स्मृत्यर्णवे च ‘अपुत्त्रस्य च या पुत्त्री सैव पिण्डप्रदा भवेत् । तस्य पिण्डान् दशैकं वा एकाहेनैव निःक्षिपेत्, इति जाबालोक्तेः ‘भर्त्तुर्धनहरा पत्नी तां विना दुहिता स्मृता । अङ्गादङ्गात् सम्भवति पुत्त्रवद्दुहिता नराधिपेति” बृहस्पतिना दुहितुर्धनहारित्वोक्तेश्च पुत्त्राभावे कन्या तदभावे पत्नी इत्याहतुः । तन्न पूर्व्वविरोधात् ‘मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः” इति दुहितुर्मातृधनहारित्वेन पुत्त्रस्य तच्छ्राद्धानधिकारापत्तेश्चोपेक्ष्यम् । वचनं भ्रातृपुत्त्राद्यभावविषयम् । पत्न्यभावे अविभक्तस्य सोदरः पूर्व्वोक्तशङ्खवचनात् । विभक्तस्य तु दुहिता धनहारित्वात् पूर्व्वोक्तजाबालवचनाच्च । तत्राप्यूढानूढासमवायेऽप्यूढैव “दुहिता पुत्त्रवत् कुर्य्यान्मातापित्रोस्तु संस्कृता । आशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोरिति” भरद्वाजोक्तेः । तदभावे दौहित्रः धनहारित्वात् । “मातापित्रोरुपाध्यायाचार्य्ययोरौर्द्ध्वदैहिकम् । कुर्व्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतादिति’ चन्द्रिकायां वृद्धमनूक्तेः “यथा व्रतस्थोऽपि सुतः पितुः कुर्य्यात्क्रियां नृप ! । उदकाद्यां महाबाहो ! दौहित्रो दुहिताकृतीति’ अपरार्कभविष्योक्तेश्च । एतद्धनहारिण आवश्यकं नान्यस्येत्याह तत्रैव स्कान्दः ‘श्राद्धं मातामहानां तु अवश्यं धनहारिणा । दौहित्रेणार्थनिष्कृत्यै कर्त्तव्यं पूर्व्वसुतरामिति’ । तेन दौहित्रोऽत्र पुत्त्रीकृत इति देवयाज्ञिकोक्तिः परास्ता । अत्र पत्नीदौहित्रसमवाये ऽशंहरत्वात्पत्न्येव कुर्य्यात् । दौहित्रभ्रातृपुत्त्रसत्त्वे विभक्तस्य दौहित्रः । अविभागे भ्रातृपुत्त्रः । भ्रातृतत्पुत्त्रसत्त्वे कनिष्ठश्चेद्भ्रातैव । ज्येष्ठश्चेत्तत्पुत्त्रः कुर्य्यादिति दाक्षिणात्यग्रन्थः । हारलतादौ तु ‘भ्रातुर्भ्राता स्वयं चक्रे तद्भार्य्या चेन्न विद्यते । तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः” इति ब्राह्मोक्तेः ‘पत्नी कुर्य्यात् सुताभावे पत्न्यभावे सहोदरः” इति कौर्म्माच्च । ज्येष्ठभ्रातैव कुर्य्यान्न तत्पुत्त्रः । यत्तु “नानुजस्य तथाग्रजः” इति, तत्कनिष्ठभ्रातृसत्त्वविषयम् । यच्च मनुः “सर्व्वेषामेकजातानामेकश्चेत्पुत्त्रवान् भवेत् । सर्व्वांस्तांस्तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीत्” इति तत् सोदराभावविषयमित्युक्तम् ।। एतेन पुत्त्रव्यतिदेशोऽयम् अतस्तस्मिन् सत्येकादश पुत्त्राः प्रतिनिधयो न कार्य्याः । स एव पिण्डदोंऽशहरश्च” इत्यत्रापीति वाचस्पतिमनुटीकाकृद्रत्नाकरादयः परास्ताः । मदनरत्ने स्मृतिसंग्रहे “पुत्त्रः कुर्य्यात्पितुः श्राद्धं पत्नी च तद्विधौ । धनहार्य्यपि दौहित्रस्ततो भ्राता च तत्सुतः । भ्रात्रोः सहोदरो भ्राता कुर्य्याद्दाहादि तत्सुतः । ततश्च सोदरभ्राता तद-

भावे च तत्सुतः” इति । भ्रातृपुत्राभावे क्रमेण पितृमातृस्नुषास्वसृतत्सुतादयः धनहारित्वात् । “भगिनीतत्सुतयोर्विशेषमाह मदनरत्ने कात्यायनः “अनुजो ह्यग्रजो वापि भ्रातुः कुर्वीत संक्रियाम् । ततस्तत्सोदरस्तद्वत् क्रमेण तर्पयेत्तयोः” अपरार्के कार्ष्णाजिनिः । “पुत्रः शिष्योऽपि वा पत्नी पिता भ्राता स्नुषा गुरुः । स्त्रीहारो धनहारी यः कुर्य्यात्पिण्डोदकक्रियाम्” । मार्कण्डेयपुराणे “पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा पिता । वित्ताभावे तु शिष्यश्च कुर्वीरन्नौर्ध्वदेहिकम्” । तेन धनहारी एतद्भिन्न इति कालादर्शः । अत्र पाठक्रमो न विवक्षितः पूर्व्ववाक्येषु अथ ततःशब्दादिभिः श्रौतक्रमोक्तेः “अथ जिह्वाया अथ वक्षसः” इति वत् । पृथ्वीचन्द्रोदये वृद्धमनुः । “स्नुषास्वस्रीयतत्पुत्रज्ञातिसम्बन्धिबान्धवाः । पुत्राभावे तु कुर्वीरन् सपिण्डान्तं यथाविधि” । मार्कण्डेयपुराणे “पुत्राद्युच्छिन्नबन्धोश्च सखापि श्वशुरस्य च । जामाता स्नेहवान् कुर्य्यादखिलं पैतृमेधिकम्” । चन्द्रिकायां वृद्धशातातपः “मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च । श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च । एतेषाञ्चैव भार्य्याणां श्वश्रुर्मातुः पितुस्तथा । श्राद्धमेषां तु कर्त्तव्यमिति वेदविदो विदुः” । शुद्धिविवेके ब्राह्मे “दत्तानां वाप्यदत्तानां कन्यानां कुरुते पिता । चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः” । दत्ता वाग्दत्ताः । “मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्व्वदा । जामातुः श्वशुराश्चक्रुस्तेषान्तेऽपि च संयताः । मित्राणां सदपत्यानां श्रोत्रियाणां गुरोस्तथा । भागिनेयसुतानां च सर्वेषान्त्वपरेऽहनि । राज्ञोऽपि सपिण्डे तु निरपत्ये पुरोहितः । मन्त्री वा तदशौचान्ते पुरा चोर्ध्वं करोति सः” । अत्र द्वितीयाहादौ श्राद्धविधानमस्थिसञ्चयनपरम् । कालादर्शे “दाहादि सम्बन्धपित्रोर्विदध्यादौरसः सुतः । तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिकासुतः । दौहित्रो धनहारी च भ्राता तत्पुत्र एव च । पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च । सपिण्डः सोदकोमातुः सपिण्डश्च सोदकः । स्त्री च शिष्यर्त्विगाचार्य्या जामाता च सखाऽपि च । उच्छिन्नबन्धोरिक्थेन कारयेदवनीपतिः” । गौतमः “पुत्राभावे सपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्य्यौ” । यत्तु चन्द्रिकायां वृद्धशातातपः “प्रीत्या श्राद्धं प्रकर्त्तव्यं सर्वेषां व-र्णविद्भिरमानिति” तत्सवर्णविषयम् । “ब्राह्मणस्त्वन्यवर्णानां न कुर्य्यात्कर्म किञ्चन । कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितां व्रजेत्” इति ब्राह्मोक्तेः “न ब्राह्मणेन कर्त्तव्यं शूद्रस्याप्यौर्ध्वदेहिकम् । शूद्रेण वा ब्राह्मणस्य विना पारशवात् क्वचित्” इति पारस्करोक्तेश्च । पारशवः ऊढशूद्रापुत्रः । अत्रेदन्तत्त्वं सर्व्वपुत्रादेः पूर्व्वस्याभावे पत्न्यादेरधिकार उक्तः । तत्राभावोऽसन्निधिः नाशश्चोच्यते । अतएव पूर्व्वत्र “असन्निधाने पूर्व्वेषाम्” इत्युक्तम् । तत्रासन्निधौ पत्न्यादेः सर्व्वत्राधिकारे प्राप्ते “प्रोषितावसिते पुत्रः कालादतिचिरादपि । एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः” “ज्येष्ठेनैव च यत्कृतम्” इत्याद्युद्देशान्तरेऽपवादात्पुत्रनाश एव पत्न्यादेः सपिण्डनाद्यधिकारः । असन्निधौ तु पूर्व्वमेव नोह्यम् । अतोऽनधिकारिणा भ्रात्रादिना कृतमप्यकृतमेवेति पुनरावर्त्तनीयम् । मासिकापकर्षोऽप्यावर्त्तनीयः । एकादशाहमासिकानि नावर्त्त्यन्ते “तज्ज्यायसापि कर्त्तव्यं सपिण्डीकरणं पुनरिति” वदावृत्तिविधानाभावादिति केचित् । तन्न तस्य निर्मूलत्वात् । अतस्तदपि कनिष्ठकृतमावर्त्त्यते वृद्धिश्रौतपिण्डपितृयज्ञार्थं तु कृतं नावर्त्त्यते । नासपिण्डेऽग्निमान् पुत्रः पितृयज्ञं समाचरेत् । न पार्व्वणं नाभ्युदयिकं कुर्व्वन् लभते फलमिति” इत्युत्तरनिषेधनादिति “भ्राता वा भ्रातृपुत्रो वा” इत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात् तथा चात्र ज्येष्ठकर्तृकत्वबाधः । सपिण्डने तु बहु वक्तव्यं तन्निर्णये वक्ष्यामः । अधिकारिविशेषेण क्रियाव्यवस्थोक्ता विष्णुपुराणे (पूर्व्वादिक्रियाः शुद्धितत्त्वे दर्शयिष्यमाणाः) । “प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रिया पुत्र प्रोच्यन्ते ता नृपोत्तराः । पितृमातृसपिण्डैश्च समानसलिलैस्तथा । तत्सङ्घान्तर्गतैश्चैव राज्ञा वा धनहारिणा । पूर्व्वा मध्याश्च कर्त्तव्याः पुत्राद्यैरेवचोत्तराः । दौहित्रैर्वा नरश्रेष्ठ ! कार्य्यास्तत्तनयैस्तथा । मृताहनि तु कर्त्तव्या स्त्रीणामप्युत्तराः क्रियाः” । दौहित्रतत्पुत्रयोर्धनहारिणोरिदम् । एवमन्यत्र धनहर्त्तुः । “यथार्थहरः स पिण्डदायी स्यात्” शङ्खोक्तेः । “प्रेतस्य प्रेतकार्य्याणि अकृत्वा धनहारकः । वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेदिति” पृथ्वीचन्द्रोदये व्याघ्रपादोक्तेः । मदनरत्ने स्कान्देऽपि “सममेतन्महत्यायां द्रविणं यत्प्रकीर्त्तितम्” इत्युक्त्वा “ऋषिभिस्तद्

निर्द्दिष्टा निष्कृतिः पावनी परा । आदेहपतनात्तस्य कुर्य्यात्पिण्डोदकक्रियाम्” इत्युक्तम् । क्रियानिबन्धे कात्यायनः “न च माता न च पिता कुर्य्यात्पुत्त्रस्य पैतृकम् । नाग्रजश्च तथा भ्राता भ्रातृणां तु कनीयसाम्” । पृथ्वीचन्द्रोदये बौधायनः । “पिता श्राद्धं न कर्त्तव्यं पुत्त्राणां तु कथञ्चन । भ्राता चैव न कर्त्तव्यं भ्रातॄणाञ्च कनीयसाम् । यदि स्नेहेन कुर्व्वीत सपिण्डीकरणं विना । गयायां तु विशेषेण ज्यायानपि समाचरेत्” । अन्याभावे पित्रादिरपि कुर्य्यात् । “उच्छिन्नबान्धवं प्रेतं पिता भ्राताथ वाऽग्रजः । जननी वापि संस्कुर्य्यान्महदेनोऽन्यथा भवेदिति” सुमन्तूक्तेः । ब्रह्मचारिणां तु शुद्धिविवेके श्राद्धे “असमाप्तव्रतस्यापि कर्त्तव्यं ब्रह्मचारिणः । श्राद्धं तु मातापितृभ्यां न तु तेषां करोति सः” । श्राद्धं मासिकाब्दिकादि सर्व्वं कार्य्यमित्यर्थः । मत्पितृ निषेधोऽन्यसत्त्वे । यत्तु छन्दोगपरिशिष्टे “न त्यजेत्सूतके कर्म्म ब्रह्मचारी स्वयं क्वचित् । न दीक्षणात्परं यज्ञे न कृच्छ्रादितपश्चरन् । पितर्य्यपि मृते नैषां दोषो भवति कर्हिचित् । अशौचं कर्म्मणां न स्यात् त्र्यहं वा ब्रह्मचारिणाम्” । तत्र याज्ञवल्क्यः “न ब्रह्मचारिणः कुर्य्युरुदकम्पतितास्तथेति” । तदप्यन्यसत्त्वे । अन्याभावे तु ब्रह्मचारिणापि कार्य्यम् पूर्व्वोक्तशुद्धमनुवचनात् । “आचार्य्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती । स तदन्नं च नाश्नीयान्नच तैः सह संवसेदिति” तेनैवोक्तेः । “ब्रह्मचारिणः शवकर्मिणोव्रतान्निवृत्तिः अन्यत्र मातापित्रोरिति” वशिष्ठोक्तेः । अत्राशौचमेकाहं वक्ष्यामः । प्रागुपनयनात्तु पञ्चवर्षोत्तरं सपिण्डीकरणवर्ज्जं षोडशश्राद्धादि सर्व्वं कार्य्यमित्युक्तं देवजानीये “असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेष्विति” प्रचेतोवचनात् । एतच्चाग्रे वक्ष्यामः । अविभक्तानां विशेषमाह पृथ्वीचन्द्रोदये मरीचिः । “बहवः स्युर्यदा पुत्त्राः पितुरेकत्रवासिनः । सर्व्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्” । ज्येष्ठस्य कर्त्तृत्वेऽपि सर्व्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्य्यपराचवर्ज्जनादयः कथिताः संस्कारास्ते सर्व्वेषां भवन्तीति सिद्धम् संसृष्टिनामप्येवम् तुल्यत्वात् । विभक्तानां विशेषमाहोशनाः । “नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्य्याणि संविभक्तधनेष्वपि” । लघुहारीतः “सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित् । ऊर्द्ध्वं सपिण्डीकरणात् सर्व्वे कुर्य्युः पृथक्पृथक्” । मदनरत्ने “विभक्तास्तु पृथक्कुर्य्युः प्रतिसंवत्सरादिकम् । एकेनैवाविभक्तेषु कृते सर्व्वैस्तु तत्कृतम्” एतेनाब्दिकादिष्वविभक्तानामनियम इति वदन् स्मृतिसागरः परास्तः” । अयमधिकारिक्रमोदाक्षिणात्यप्रचलितः ।

गौड़देशवासिभिस्तु रघुनन्दनमतानुसारिणी व्यवस्था क्रियते सा च व्यवस्था शुद्धितत्त्वे तेन दर्शिता यथा व्यासः “कृतचूड़स्तु कुर्व्वीत उदकं पिण्डमेव च” । एतच्च पुत्त्रेतरपरम् “असंस्कृतः सुतः श्रेष्ठोनापरोवेदपारगः” इति दायभागधृतात् । अन्यथा सुतत्वेन विशेषोपादानं व्यर्थं स्यात् । श्राद्धेऽनुपनीतस्य मन्त्रपाठाधिकारमाह मनुः । “नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते । शूद्रेण हि समस्तावद्यावद्वेदे न जायते” । अभिव्याहारयेत् वदेदिति यावत् स्वार्थे णिच् । तत्र प्रथमतोज्येष्ठपुत्त्रः यथाह मरीचिः ‘मृते पितरि पुत्त्रेण क्रिया कार्य्या विधानतः । बहवः स्युर्यदा पुत्त्राः पितुरेकत्र वासिनः । सर्व्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् । द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्” । तदभावे यथाक्रमं कनिष्ठपुत्त्रपौत्त्रप्रपौत्त्राः । तथाच विष्णुपुराणम् ‘पुत्त्रः पौत्त्रः प्रपौत्त्रो वा तद्वद्वा भ्रातृसन्ततिः । सपिण्डसन्ततिर्व्वापि क्रियार्हो नृप ! जायते” । एतच्च षोडशश्राद्धपर्य्यन्तम् तथाच छन्दोगपरिशिष्टम् “पितामहः पितुः पश्चात् प्रेतत्वं यदि गच्छति । पौत्त्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् । नैतत् पौत्त्रेण कर्त्तव्यं पुत्त्रवांश्चेत् पितामहः” । सपिण्डीकरणपर्य्यन्तमपृथक्कर्त्तव्यमाह लघुहारीतः ‘सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्” । एषामभावे पत्नी तथाच शङ्खः ‘पितुः पुत्त्रेण कर्त्तव्या पिण्डदानोदकक्रिया । तदभावे तु पत्नी स्यात्तदभावे सहोदरः । भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च’ । इति “अपुत्त्रधनं पत्न्यभिगामि तदभावे दुहितृगामीत्यादि” विष्ण्वादिवचनेन धनाधिकारश्रुतेः । तदभावे इति प्रपौत्त्रपर्य्यन्ताभावपरं पार्व्वणपिण्डदातृत्वेन धनाधिकारित्वेन च तेषां बलवत्त्वात् । ‘अपुत्त्रा स्त्री यथा पुत्त्रः पुत्त्रवत्यपि भर्त्तरि । पिण्डं दद्यात् जलञ्चैव अकस्मात्तु पुत्त्रिणी” इति निर्मूलं समूलत्वेऽपि बालदेशान्तरितपुत्त्रसद्भावविषयमिति श्राद्धविवेकप्रभृतयः । पत्न्यभावे कन्या । ‘अपुत्त्रस्य तु

या पुत्री सैव पिण्डप्रदा भवेत् । तस्य पिण्डान् दशैवं-
तामेकाहेनैव निर्व्वपेत्” इति कात्यायनवचनात् “गोत्र-
रिक्थानुगः पिण्डः” इति मनुवचनेन दत्ताद्यपेक्षया
तस्याबलवत्त्वात् । कन्याभावे यथाक्रमं वाग्दत्तादत्ता-
दौहित्राः “दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता ।
चतुर्थेऽहनि तास्तेषां कुर्व्वीरन् सुसमाहिताः” इति
ब्रह्मपुराणवचनात् । ननु “दुहिता पुत्रवत् कुर्य्यान्मा-
तापित्रोश्च संस्कृता । आशौचमुदकं पिण्डमेकोद्दिष्टं
सदा तयोः” इति यमवचनात् पुत्रानन्तरमेव दुहित्रधि-
कारश्रुतेः इति चेन्न पत्न्याः प्रथमं धनाधिकारश्रुतेः
यथा याज्ञवल्क्यः । “पत्नी दुहितरश्चैव पितरौ
भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्य सब्रह्म-
चारिणः । एषामभावे पूर्व्वेषां धनभागुत्तरोत्तरः” इति ।
तथा “मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे” ।
इति ब्रह्मपुराणात् । “पौत्रदौहित्रयोर्लोके न विशेषो-
ऽस्ति धर्म्मतः । तयोर्हि मातापितरौ संभूतौ तस्य
देहतः” । इति मनुवचनेन ‘पौत्रदौहित्रसंयुक्ता ये तथा
चिरजीविनः । प्रियङ्कराश्च बालानां ते नराः स्वर्गगा-
मिनः” इति विष्णुधर्म्मोत्तरेण पौत्रतुल्यताभिधानाच्च ।
तेन यथा पुत्राभावे पौत्रस्तथा दुहित्रभावे दौहित्रः । न
च दत्तकन्यादौहित्राभ्यां प्राक् सगोत्रत्वात् सोदराधिकार
इति वाच्यम् गोत्रजत्वापेक्षया पिण्डदानादेर्धनसाध्य-
त्वात् रिक्थग्राहिणोर्दुहितृदौहित्रयोर्बलवत्त्वात् । अत
एव दुहितृधनाधिकारे तद्धनेन कृतोपकारकरणं हेतु-
रित्याहापस्तम्बः । “अन्तेवास्यर्थांस्तदर्थेषु धर्म्मकृत्येषु
प्रयोजयेत् दुहिता चेति” तदर्थेषु मासिकादिना तद्भोगार्थं
धर्म्मकृत्येष्वदृष्टार्थमिति । “गोत्ररिक्थानुगः पिण्डः”
इति मनूक्तेः । “अनंशौ क्लीवपतितौ जात्यन्धबधिरौ
तथा । उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः” । इति
मनूक्तानां “पितृद्विट्पतितः षण्डो यश्च स्यादौपपातिकः ।
औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः” इति
नारदोक्तानाञ्च भागानधिकारिणां पिण्डदानानधि-
कारः । जात्यन्धबधिरौ जन्मप्रभृतिअन्धबधिरौ निरिन्द्रियाः
पङ्ग्वादयः श्रौतस्मार्त्तकर्म्मानधिकारिणोऽपि गृह्यन्ते
इति रत्नाकरः । तथाच वृद्धशातातपः । “चाण्डालं
पतितं व्यङ्गमुन्मत्तं शवदाहकम् । सूतिकां सूयिकां नारीं
रजसा च परिप्लुताम् । श्वकुक्कुटवराहांश्च ग्राम्यान्
संस्पृश्य मानवः । सचेलं सशिरः स्नात्वा तदानीमेव शु-
ध्यति” । व्यङ्गः पाण्यादिविकलः । व्यङ्गोन्मत्तयोः
सदाचारहीनत्वात् अस्पृश्यतेति प्रायश्चित्तविवेकः । श्रौ-
तस्मार्त्तक्रियानधिकारित्वं सदाचारहीनत्वञ्च मूत्रपुरी-
षाद्यशौचापनयनासमर्थत्वेनेति बोध्यम् । सूयिकां प्रस-
वकारयित्रीम् । पितृद्विट् पोषणादेर्दैहिकविमुखः । औ-
पपातिकः उपपातकैः संसृष्टः । उपपातकीति प्रकाश-
कारपाठेऽपि स एवार्थः । अपपातित इति पाठे तु
राजवधादिदोषेण बान्धवैर्यस्य घटापवर्ज्जनं कृतमिति
कल्पतरुः । व्यक्तं याज्ञवल्क्येनोक्तम् “न ब्रह्मचारिणः
कुर्य्युरुदकं पतिता न च । पाषण्डमाश्रिताः स्तेना व्रात्या
न विकर्म्मिणः । गर्भभर्त्तृद्रुहश्चैव सुरापाश्चैव योषितः” ।
पाषण्डं त्रयीबाह्यधर्म्मम् । स्तेनाः सततं चौर्य्यरतयः ।
व्रात्याः षोड़शवर्षपर्य्यन्तमप्राप्तोपनयनाः, विकर्म्मिणः आ-
लस्येनाश्रद्धानतया स्वधर्म्मानुष्ठायिनः व्यङ्गत्वा-
दिना स्वधर्म्मानुष्ठानासमर्थाश्च बोध्या इति “कश्चित्
क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः । गृहीत्वास्थीनि
तद्बन्धुर्नीत्वा तोये विनिःक्षिपेत्” इत्यादिपुराणे क्रम-
दर्शनादत्रापि दौहित्राभावे सोदरः पूर्व्वोक्तयमवचनेऽ-
प्येवं क्रमो बोध्यः । अत्र ज्येष्ठः कनिष्ठश्चाविशेषात् । “नानु-
जस्य तथाग्रज” इति छन्दोगपरिशिष्टं कनिष्ठभ्रातृश्राद्ध-
विषयं तयोरभावे तथाविधौ वैमात्रेयौ । “भ्रातुर्भ्राता
स्वयं चक्रे तद्भार्य्या चेन्न विद्यते । तस्य भ्रातृसुतश्चक्रे
यस्य नास्ति सहोदरः” इति ब्रह्मपुराणाद्वैमात्रेय-
स्यापि एकजातत्वेन भ्रातृत्वात् । “देशान्तरस्थक्लीवैकवृष-
णानसहोदरान्” इत्यादिछन्दोगपरिशिष्टेन परिवेदने वैमात्रे-
यस्य भ्रातृत्वप्रसक्तावसहोदरानित्यनेन प्रतिप्रसवाच्च ।
पितृव्यपुत्रादौ भ्रातृपदप्रयोगो गौणः । गुणश्च बीजि-
पुरुषापेक्षया समानसंख्यजनकजन्यत्वमिति । धनिपित्रादि
पिण्डद्वयदातुः सोदरपुत्रात् धनिपित्रादिपिण्डत्रयदा-
तृत्वाद्वैमात्रेयस्य धनाधिकारित्वेन बलवत्त्वाच्च । ततश्च
सहोदर इति पूर्व्वोक्तानुरोधात् वैमात्रेयपरमपि अन्यथा
सहोदराभावे वैमात्रेयसत्त्वे वैमात्रेयपुत्राधिकारापत्तेः ।
तेन वैमात्रेयाभावे सोदरवैमात्रेयभ्रातृक्रमवत् सोदर-
पुत्रस्तदभावे वैमात्रेयपुत्रः । तन्मातृभोग्यपिण्डदातृतया
प्रथमाधिकारित्वेन बलवत्त्वात् तस्यातिदिष्टपुत्रत्वाच्च । तद-
भावे पिता । “पुत्रो भ्राता पिता वापि मातुलो गुरुरेव च ।
एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव बान्धवाः” इति प्रचे-
तोवचनात् । ‘न पुत्रस्य पिता दद्यात्” इति छन्दोग-

परिशिष्ट भ्रातृपुत्त्रपर्य्यन्तसङ्ख्याविषयम् । तदभावे माता ।"पुत्त्रोभ्राता पिता वापि" इत्यत्रापिशब्देन मातुः समुच्चयात् । "पितरौ भ्रातरश्चे"त्यादौ धनाधिकारे तथा दर्शनाच्च । अतएव श्राद्धविवेके पितुरभावे तुल्यन्यायतया मातापीत्युक्तमिति । तदभावे पुत्त्रवधूः । तथाच शङ्खः "भार्य्यापिण्डं पतिर्दद्यात् भर्त्त्रे भार्य्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे द्विजोत्तमः" । अत्रादिपदात् श्वशुरादेरपि परिग्रहः इतरत्र स्नुषात्वाभावात् । द्विजोत्तमइत्यत्र सपिण्डक इति मैथिलानां पाठः । स्वस्वपदोपात्तसपिण्डविशेषाभावे "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" इति धनाधिकारे तथादर्शनादत्रापि सन्निधितारतम्येन माता पुत्त्रवधूः पौत्त्री पौत्त्रवधूः प्रपौत्त्री प्रपौत्त्रवधूः पितामहः पितामही पितृव्यादयः सपिण्डाश्चाधिकारिणः" "पुत्त्राभावे स पिण्डाः" इति वक्ष्यमाणवचनात् । शङ्खवचनस्यमैथिलपाठाच्च । तदभावे समानोदकाः ।"सपिण्डसन्ततिर्वापि" इति वक्ष्यमाणात् । सपिण्डसन्ततिः समानोदकाइत्यर्थः । तदभावे सगोत्त्राः "सगोत्त्रैश्चेति" "गोत्रजक्रमानुगः पिण्डः" इत्युक्तत्वात् "एषामभावे सर्व्वेषां समानोदकसन्ततिरिति" वक्ष्यमाणाच्च । तदभावे मातामहः "दातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्व्वन्ति द्वितीयेऽहनि सर्व्वदा" इति ब्रह्मपुराणात् । तदभावे मातुलः तदभावे भागिनेयः "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च" इति शातातपीयपाठक्रमात् । तदभावे सन्निधिक्रमेण मातामहसपिण्डाः । तदभावे मातामहसमानोदकाः ।"सपिण्डसन्ततिर्व्वापि क्रियार्होऽन्तप! जायते । एषामभावे सर्व्वेषां समानोदकसन्ततिः । मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा" विष्णुपुराणात् । तदभावे श्वशुरः तदभावे जामाता "जामातुः श्वशुरास्तत्कुर्त्तेषां तेऽपि च संयताः" इति ब्रह्मपुराणपाठक्रमात् । तदभावे पितामहीभ्राता । "भागिनेयसुतानाञ्च सर्व्वेषान्त्वपरेऽहनि । श्राद्धं कार्य्यञ्च प्रथमे स्नात्वा कृत्वा जलक्रियाम्" इति ब्रह्मपुराणात् । अपरेऽहनि इत्यत्राशौचान्तदिनस्येति शेषः । तदभावे यथाक्रमं शिष्यर्त्त्विगाचार्य्याः, गौतमेन "पुत्त्राभावे सपिण्डाः मातृसपिण्डा वा शिष्या वा दद्युः तदभावे ऋत्विगाचार्य्यौ" इत्युक्तत्वात् । तदभावे सुहृत्पितृसुहृदौ "मित्राणां तदपत्यानामिति" ब्रह्मपुराणपाठक्रमात् । तदभावे एकग्रामवासी । "संघातान्तर्गतैर्वापि कार्य्या प्रेतस्यसत्क्रिया" इति विष्णुपुराणात् तदभावे तद्धनं गृहीत्वा यः कश्चित् सवर्णः । "उच्छन्नबन्धुस्वे श्राद्धं कारयेदवनीपतिः" इति विष्णुपुराणात् । और्द्ध्वदेहिकमधिकृत्य विष्णुपुराणं "ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन । कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियात्" ।

स्त्रियास्तु यथाक्रमं पुत्त्रपौत्त्रप्रपौत्त्राः विष्णुपुराणे "पुत्त्रः पौत्त्रः प्रपौत्त्रो वा" इत्यविशेषश्रुतेः । तदभावे कन्या ।"अपुत्त्रस्य च या पत्नी" इतस्योर्द्ध्वगतलिङ्गाविवक्षया स्त्रीपुंसाधारणत्वात् धनाधिकारित्वाच्च । तदभावे वाग्दत्ता "दत्तानामप्यदत्तानाम्" इत्यत्रापि पितृपदस्य मातृपदोपलक्षकत्वात् । तदभावे दत्ता "दुहिता पुत्त्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता" इति मनुवचनात् । तदभावे दौहित्रः प्रागुक्तब्रह्मपुराणे तथा दर्शनात् । "पौत्त्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्म्मतः । तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः" इत्यनेन यथा पुत्त्राभावे पौत्त्रः तथा दुहित्रभावे दौहित्रः इति प्रागेव उक्तत्वात् । "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च । श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च । एतेषां चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा । पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः" इति शङ्खशातातपवचनेन मातामह्याश्च साक्षात् दौहित्रेण पिण्डदानश्रुतेः धनाधिकारित्वाच्च । दौहित्राभावे सपत्नीपुत्त्रः । तस्य पुत्त्रत्वस्मरणात् । यथाह मनुः । "सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत् । सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्म्मनुः" । एकपत्नीनामिति एकः पतिर्यासामिति अत्र सपत्नीपुत्त्रस्य पुत्त्रत्वातिदेशात् तत्सत्त्वेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तं तन्न "पुत्त्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः । पुरुषस्य पुनस्तन्ये भ्रातृपुत्त्रादयोपि ये" इति लघुहारीतवचने एवकारेणातिदिष्टपुत्त्रनिषेधात् । अतएवोत्तरार्द्धे भ्रातृपुत्त्रोपादानं सङ्गच्छते । अन्यथा पुंसां तत्र पुत्त्रत्वातिदेशात् पुत्त्रत्वेनैव प्राप्तेः भ्रातृपुत्त्रोपादानं व्यर्थं स्यात् । तथाह मनुः । "भ्रातृणामेकजातानामेकश्चेत् पुत्त्रवान् भवेत् । सर्व्वे ते तेन पुत्त्रेण पुत्त्रिणोमनुरब्रवीत्" एकजातानामेकपितामातृजातानां तथाच "हलायुधः । एकजाता बहवो भ्रातरः स्युः सहोदराः । एकस्यापि सुते जाते सर्व्वे ते पुत्त्रिणोमताः" । एतद्ग्रन्थमूलं तदिति चेन्न आदिपदग्राह्येषु "भ्राता वा भ्रातृपुत्त्रो वा सपिण्डः शिष्यएव वा ।

सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयन्ततः" इति लघुहारीतोक्तेः न्यायानुपपत्तेः । भ्राता वेति वाशब्दात् पूर्व्वेषां दौहित्रादीनां तदपेक्षया प्रधानाधिकारिणां समुच्चयः। अत एव सपिण्डत्वेनैव भ्रातृतत्पुत्त्रयोरधिकारसिद्धौ पृथगुपादानं प्राधान्यज्ञापनार्थम् । पुत्त्रत्वातिदेशफलन्तु पुन्नामनरकनिस्तारः । अतस्तत्सत्त्वे क्षेत्रजाद्यकरणञ्च । तथाहि "पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः । तस्मात् सन्ततिधर्म्मेणापि तदुत्पत्तौ यतेत सः" इति मनुवचने पुन्नामनरकत्राणाय पुत्त्रोत्पादनं विहितम् । तच्च फलं यद्यतिदिष्टपुत्त्राभ्यां भ्रातृसपत्नीजाभ्यां निष्पन्नं तदा सिद्धे इच्छाविरहात् तदुपायान्तरपुत्त्रप्रतिनिधीभूतक्षेत्रजादेर्नोपादानम् । पुत्त्रोत्पादनन्तु तथापि कार्य्यं पुत्त्रसत्त्वेऽपि पुत्त्रान्तरेच्छाविधानेन तत्कर्त्तव्यताप्रतीतेः यथा मत्स्यपुराणम् । "एष्टव्या बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्" । एवमेव कल्पतरुपारिजातस्मृतिसारमहामहोपाध्यायरत्नाकरवाचस्पतिमिश्रादयः । स्त्रीणामपि पुत्त्रात् पुन्नामनरकनिस्तारमाह रत्नाकरे शङ्खलिखितौ "आत्मा पुत्त्र इति प्रोक्तः पितुर्मातुरनुग्रहात् । पुन्नाम्नस्त्रायते पुत्त्रस्तेनापि पुत्त्रसंज्ञितः" । पूर्व्वोक्तलघुहारीतवचने पुत्त्रश्चेति तत्सत्त्वभात् विवक्षितम् । "सपिण्डीकरणान्तानाम् पुत्त्राभावे न विद्यते" इति मार्कण्डेयपुराणैकवाक्यत्वात् । "यानि पञ्चदशाद्यानि अपुत्त्रस्येतराणि च । एकस्यैव तु दातव्यमपुत्त्रायाश्च योषितः" इति छन्दोगपरिशिष्टेऽपुत्त्राया एकाद्यपञ्चदशश्राद्धैः प्रेतत्वपरिहारोक्तत्वाच्च । एतत् पत्युरभावे द्रष्टव्यम् । "अपुत्त्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डनम् । श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्" इति पैठीनसिवचनात् । ततश्च यथा पित्रो पुत्त्रेऽन्यस्यापि सपिण्ड्यते । एवं पतिसत्त्वेऽपि । अतएव मैथिलैरवीरायाः सपिण्डनं नास्तीत्युक्तम् तदभावे पतिः । "भार्य्यापिण्डं पतिर्दद्यात्" इति शङ्खवचनात् । "न जायायाः पतिः कुर्य्यादपुत्त्राया अपि क्वचित्" इति छन्दोगपरिशिष्टवचनम् सपत्नीपुत्त्रपर्य्यन्तसद्भावविषयम् । पत्यभावे स्नुषा "श्वश्र्वादेश्च स्नुषा चैव" इति यमवचनात् । तदभावे सान्निध्यक्रमेण सपिण्डाः । शङ्खवचने "तदभावे सपिण्डकाः इति मैथिलपाठात्" । "तदभावे सपिण्डः" इति पूर्व्वोक्तगोतमवचने सामान्यतः श्रुतेश्च । तदभावे समानोदकाः । "सपिण्डसन्ततिर्वेत्यविशेषश्रुतेः । तदभावे सगोत्राः । समानोदकसन्ततिरिति वक्ष्यमाणात् । श्राद्धविवेकेऽप्येवम् । एषामभावे पिता । "दत्तानाञ्चाप्यदत्तानां कन्यानां कुरुते पिता" इत्युक्तत्वात् । तदभावे भ्राता । "पुत्त्रो भ्राता पिता वापि" इत्यविशेषश्रुतेः । तदभावे यथाक्रमं दायभागोक्तोपकारतारतम्येन, "मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च । श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च । एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा । पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः" इति शातातपवचनात् भगिनीपुत्त्रभर्त्तृभागिनेयभ्रातृपुत्त्रजामातृभर्त्तृमातुलभर्त्तृशिष्याः पत्न्यपेक्षया पौत्त्रादिवत् पिण्डदानतारतम्येन क्रमेणाधिकारिणः । तथाहि तत्पिण्डतत्पुत्त्रदेयतत्पित्रादिपिण्डत्रयदातृत्वात् भगिनीपुत्त्रः । तदभावे भर्त्तृभागिनेयः । पुत्त्राद्भर्त्तुर्दुर्बलत्वेन तत्स्थानपातिनोऽपि तथैव बलाबलस्य न्याय्यत्वेन तद्भर्त्तृदेयपुत्त्रत्रयपिण्डतद्भर्त्तृपिण्डदत्वात् । तदभावे भ्रातृपुत्त्रः । तत्पिण्डतत्पुत्त्रदेयतत्पित्रादिपिण्डद्वयदत्वात् । तदभावे जामाता । "मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा । श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः" इति वृहस्पतिवचनेन मातृष्वस्रादीनां मातृतुल्यत्वाभिधानात् । स्वस्रीयादेः सह जामातुः पुत्त्रतुल्यत्वप्रतीतेः । अतएव तेषां धनभागित्वमाह वृहस्पतिः । "यदासामौरसो न स्यात् सुतो दौहित्र एव वा । तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः" । धनग्राहित्वेनापि पिण्डदातृत्वमाह मनुः । "गोत्ररिक्थानुगः पिण्डः" इति । तदभावे भर्त्तृमातुलभर्त्तृशिष्याः क्रमेणाधिकारिणः शातातपीयपाठक्रमाविरोधात् । प्रातिस्विकानामभावे पितृवंश्यमातृवंश्यौ । "पितृमातृसपिण्डैश्च समानसलिलैर्नृप !" इति ब्रह्मपुराणेऽविशेषश्रुतेः । तयोरभावेऽसम्बन्धी द्विजोत्तमः पूर्व्वोक्तशङ्खवचने द्विजोत्तम इति गौडीयपाठात् संघातान्तर्गतैर्व्वापीति अविशेषश्रुतेः ।

त्रिधाक्रियाकर्त्तृनाह विष्णुपुराणम् "पुत्त्रः पौत्त्रः प्रपौत्त्रो वा तद्वद्वा भ्रातृसन्ततिः । सपिण्डसन्ततिर्व्वापि क्रियार्हो नृप ! जायते । एषामभावे सर्व्वेषां समानोदकसन्ततिः । मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा । कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृप । संघातान्तर्गतैर्व्वापि कार्य्या प्रेतस्य सत्क्रिया ।

कुर्य्यात् वर्जयित्वा मृतेऽह्नि । अमावस्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः । सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिः" । त्रयं सम्प्रदानानां त्रयं कुर्य्यात् त्रियो दद्याद्दक्षिणाः । मृताहपर्य्युदस्तत्वाद्दैवतत्वस्य प्रति-प्रसवमाह अमावस्यामिति प्रेतपक्षोऽत्र पितृपक्षः आश्व-युक्कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षसा-मान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः । पितृपक्षं विशेषयति हेमाद्रिमदनाचार्य्यधृतं नागरखण्डम् 'नभो वाथ नभस्यो वा मलमासो यदा भवेत् । सप्तमः पितृपक्षः स्याद-न्यत्रैव तु पञ्चमः' । अत्र श्रावणभाद्रयोरन्यतरस्य मल-मासत्वे आषाढ्यपेक्षया सप्तमपक्षस्य पितृपक्षत्वम् । अत-एव प्रेतपक्षकृतत्वं न तु मलमासभाद्रकृष्णादिमृतस्य । ततश्च तत्र मृतस्य वर्षान्तरेऽश्वयुक्कृष्णपक्षेऽपि तच्छ्राद्धकरणे न पार्व्वणं किन्त्वेकोद्दिष्टमिति । अत्र पार्व्वणो विधिः पार्व्वणेतिकर्त्तव्यता नैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृ-तयः । तन्न पञ्चदैवत्यत्रिपुरुषिकत्वात् मृताहपर्य्युदस्तस्य पार्व्वणो विधिरित्यनेन प्रतिप्रसवात् तथात्वे सत्येकोद्दिष्टं त्रिपुरुषिकं न तु षट्दैवतिकं 'कव्यसमन्वितं मत्वा त-थाद्यं स्यादुपेक्षणम् । पत्न्यादिकन्तु शेषेषु पिण्डाः स्युः षड्भिरिति स्थितिः' इति छन्दोगपरिशिष्टवचनेन पत्न्यादि-कर्त्रतिरेकेण षट्संख्यानियमात् । एवममावास्यादिमरण-निमित्तेन मातुरपि पत्न्यादिकं पार्व्वणविधिनैव 'अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्' इति आपस्तम्बवचने अपुत्रा इति विशेषणोपादानात् सपुत्राणां पार्व्वणस्यानुज्ञानात् । एतच्च मात्रादित्रितयदैवतं कार्य्यम् । "मातृपितामह्यौ-प्रपितामह्यौ च पूर्व्ववत् ब्राह्मणान् भोजयित्वा" इत्यन्व-ष्टकायां तथा दर्शनात् अवसानदिननिमित्तत्वेन पार्व्वण-विधिना छन्दोगैरपि मात्रादित्रिकाणां श्राद्धं कर्त्तव्यं "न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते" इति छन्दोग-परिशिष्टवचने विशेषतः प्रतिप्रसवात् । एवं सपिण्डी-करणेऽपि । एतच्च मृताहपार्व्वणं मातापित्रोरेव । तथाच हेमाद्रिधृतं कात्यायनवचनम् । "सपिण्डीकरणा-दूर्द्ध्वं पित्रोरेव हि पार्व्वणम् । पितृव्यभ्रातृमातॄणा-मेकोद्दिष्टं सदैव तु" । मातृपदं सपत्नीमातृपरम् । सपत्नीमातरित्यत्र मातृपदस्य राजदन्तादित्वात् पर-निपातः । ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु सपत्नीमातरित्यादिकम् । एवं साग्निकौरसक्षेत्रजाभ्यां मृताहे पार्व्वणं कर्त्तव्यम् । 'औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश' इति जाबालिवचनस्य "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् । पार्व्वणेन विधानेन देयमग्निमता सदा" इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात् । उशना च "प्रत्य-ब्दं दर्शवच्छ्राद्धं साग्निः कुर्वीत वै द्विजः । एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः" । अत्र प्रागुक्तयुक्त्या प्रेतश्राद्धस्य एकोद्दिष्टत्वाभिधानात् सांवत्सरिकश्राद्धे यदे-कोद्दिष्टपदसत्त्वं तत् प्रेतश्राद्धधर्म्मप्राप्त्यर्थम् । ततश्च योग्यत्वादेकार्घ्यादिलाभः न च यथा प्रेतश्राद्धे पितृशब्द-स्थाने प्रेतपदोहः तथात्रापीति वाच्यं सांवत्सरिके प्रेतत्वाभावात्तथाविधानानुपपत्तेः । एवं प्रतिसांवत्-सरिकश्राद्धे सम्बन्धार्थकपदं आर्थाःप्रार्थं शेषभोजनञ्च कर्त्तव्यम् ।

रजस्वलायां विशेषयति गौतमः 'अपुत्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके । रजस्वला भवेत् सा तु कुर्य्यात्तत्पञ्चमे दिने' । कुर्य्याच्छ्राद्धमिति शेषः । यत्तु श्राद्धचिन्तामणौ 'एकोद्दिष्टं लौकिकेन सिद्धान्नेन क-र्त्तव्यम् । "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् । अभावे पाकपात्राणां तदहः समुपोषणम्" इति लघुहारी-तवचनात् पाकपात्राभावः पाकसामग्र्याभावोपलक्षणं त-दपि नामश्राद्धं किन्तूपोषणमेव श्राद्धस्थानीयमित्यर्थः । स्वयमित्यभिधानादपाटवादिनापि नान्यद्वारा कारयितव्यम् अतएव उपवासेनैव श्राद्धस्थानीयेन तदकरणप्रायश्चित्तेन वा कृतकृत्यतया आशौचादिवचनादपि नैकादश्या-मनुष्ठानमिति" तन्न पितृतृप्तेरजातत्वेनैकादश्यां तदनु-ष्ठानस्य युक्तत्वात् । अन्यथा षोडशश्राद्धाधिकारिणः कदा-चित्तथात्वे 'यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश । पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि' इति यमवचनेन षोडशश्राद्धाभावे प्रेतत्वपरिहारो न स्यात् । तस्मादुपवा-सेन श्राद्धार्थः किन्तु तदानीन्तनाकरणप्रायश्चित्तार्थः यथा स्वकालाकृतसंस्कारे प्रायश्चित्तं कृत्वा कालान्तरे तत्करणं तथात्रापि तद्दिने उपवासं कृत्वा एकादश्यां श्राद्धं कर्त्तव्यमिति । एकोद्दिष्टं नान्यद्वारा कार्य्यमित्यत्रापि गोत्रजेतरत्वेन विशेषणीयं 'न कदाचित् सगोत्राय श्राद्धं कार्य्यं सगोत्रजैः' इति प्रेतश्राद्धे ब्रह्मपुराणात् । अत्र हि नागोत्रजस्य साक्षात् कर्त्तृत्वं निषिध्यते सगोत्रायेत्यस्य व्य-र्थापत्तेः तस्मादगोत्रजद्वारभूतैः सगोत्राय श्राद्धं न

कार्य्यमित्यर्थः । तथाच पर्य्युदासपक्षे गोत्रजद्वारा कारयितव्यमिति सुव्यक्तमेव । प्रसज्यपक्षे तु असगोत्रजविशेषणस्वरसात् गोत्रजलाभः । प्रेतश्राद्धधर्म्मप्राप्तिल्यात् सांवत्सरिकमपि तथेति श्राद्धविवेकः । कल्पतरुरत्नाकरयोस्तु स्वगोत्रायेति पठितं समानमायं गोत्रं यस्य स स्वगोत्रः विद्यमानगोत्र इत्यर्थः । यस्मै श्राद्धं कर्त्तव्यं तस्य स्वगोत्रजे विद्यमानेऽन्यगोत्रजेन संघातान्तर्गतेन राज्ञा श्राद्धं न कारयितव्यमिति व्याख्यातञ्च । एतन्मतेऽप्युद्दुहित्रादीनामसगोत्रत्वेऽपि न निषेधः । वस्तुतस्तु तत्पाठेऽपि कर्म्मधारयापेक्षया बहुव्रीहेर्जघन्यत्वात् समानमायञ्च तत् गोत्रञ्चेति तस्मै अन्यगोत्रजद्वारा श्राद्धं न कार्य्यमित्यर्थः । अतोलघुहारीतवचने स्वयंपदं स्वगोत्रपरम् । अन्यथा ब्रह्मपुराणोक्तागोत्रजपदवैयर्थ्यापत्तेः । एवञ्च भविष्यपुराणप्रभासखण्डयोः “मृताहनि पितुर्यस्तु न कुर्य्यात् श्राद्धमादरात् । मातुश्चैव वरारोहे ! वत्सरान्ते मृताहनि । नाहन्तस्य महादेवि ! पूजां गृह्णाति श्रीहरिः” मत्स्य० । “पतिताऽज्ञानिनोमूर्खाः स्त्रियोऽथ ब्रह्मचारिणः । मृताहं समतिक्रम्य चाण्डालेष्वभिजायते” । इत्याभ्यां कालमाधवीयधृताभ्यां वचनाभ्यां सांवत्सरिकश्राद्धस्य मृताहकर्त्तव्यत्वेनावश्यकत्वात् भविष्यन्मृताहे स्वयं कर्त्तव्यत्वसम्भावनारहितेन मृताहात् पूर्व्वकालेऽपि प्रतिनिधाप्यते । ‘प्रतिष्ठाग्निं स्वदारेषु परिकल्प्यार्त्विजं तथा । प्रवसेत् कार्य्यवान् विप्रोवृथैव न चिरं क्वचित्” इति छन्दोगपरिशिष्टोक्तसाय प्रातर्होमप्रतिनिधिवत् । एवं सति प्रतिनिध्यकरणएव एकादश्यां क्रियते । नच पाकस्याङ्गत्वेन प्रधानतिथिकर्त्तव्यतानियम इति वाच्यम् । ‘श्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी” इति वचनेन मुहूर्त्तमात्रलाभेऽपि कर्त्तव्यतोपदेशात् तदानीं पाके तदसम्भवात् । एतद्दोष्याद्धपभोजनेऽपि न तन्नियम इति” । एतञ्च पुत्रदुहित्रोर्नित्यं प्रागुक्तवचनेभ्यः । अनपत्यकपौत्रस्यापि तथा । “मृतमासस्य यः पक्षस्तत्तिथौ प्रतिवत्सरम् । “यावत्कर्त्ति पौत्रोऽपि एकमुद्दिश्य दापयेत्” प्रचेतोवाक्यात् लघुहारीतवाक्येन द्विजाति विज्ञाते नैवेकोद्दिष्टकरणविधानात् तत्पाकेऽधिकारिविशेषोनिरूप्यते । तत्र श्रा०त० देवलः “तथैवामन्त्रितोदाता प्रातः स्नातः सहाम्बरः । आरभेत नवैः पात्रैरन्वारम्भं दिवास्वपः” । अत्र सवास्य इत्युक्तेः सपिण्डानामपि पाकाधिकारः इति गौडाचारः । नि० सि० विशेष उक्तः । हेमा० आश्वला० “समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः । कृतोपकारिभिश्चैव पितृकार्य्यं प्रशस्यते” । व्यासः “महिला चैव सुस्नाता पाकं कुर्य्यात् प्रयत्नतः । निवपनेषु च पाकेषु पुनः स्नानं समाचरेत्” पृथ्वीचन्द्रोदये ब्राह्मे । “रजस्वलाञ्च पाषण्डां पुंश्चलीं पतितां तथा । त्यजेच्छूद्रीं तथा वन्ध्यां विधवाम् चान्यगोत्रजाम् । व्यङ्गकर्णीं चतुर्थाहस्नातामपि रजस्वलाम् । वर्ज्जयेच्छ्राद्धपाकार्थमभातृपितृवंशजाम्” स्मृतिसारे “न पाकं कारयेत् पुत्रीमन्यां वाप्यसगोत्रजाम् । मृतवन्ध्यां पुंश्चलीं च गर्भिणाञ्चैव दुर्मुखाम्” ।

**एकोनचत्वारिंशत्** स्त्री एकेनोना चत्वारिंशत् । (ऊनचल्लिश) १संख्यायां २तत्संख्यान्विते च एवम् एकोनविंशत्यादयोऽपि एकेनोनतत्संख्यासंख्येययोः स्त्री ।

**एकौघ** पु० एकः अविच्छिन्नओघः प्रवाहः । अविच्छिन्नप्रवाहे “एकौघेन स्वर्णपुष्पैर्दिषन्तः” माघः ।

**एज** कम्पने भ्वा०आत्म०अक०सेट् । एजते ऐजिष्ट एजाञ्चक्रे एजाम्बभूव आस चक्रे । एजकः एजितव्यः एजिता । एजितः एजमानः एजनम् णिच् । एजयति जनमेजयः । “कुरून्नमत एजयतेऽलिनी मे” भाग०५,२,१५ । वेदे गणव्यत्यासः । “एजतु दशमास्यो गर्भः” यजु०२८ अथास्य मध्यमेजतु” २३,२७ सुष्का विदसा एजतो गोशफे” २३,२८ । “उदेजति पतति यस्य तिष्ठति” अथ० २०८ ११,१ । “सुखेन स्पिणरेजति” ऋ० १,१०,२ उदस्य के जत्यन्तरा वा एतदाहवनीयम्” श०ब्रा० १,५,१,२५ क्वचिल्लोके तथा । “शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः । सर्पाणां प्रपदा यान्ति धृतराष्ट्रोऽयमेजति” भा०आ० ८० अ० ‘त्वत्तःपरं नापरमप्यनेजदेजच्च किञ्चिद् व्यतिरिक्तमस्ति” भाग० ७,३,३० । कर्म्मापचित एजतकः” भाग० ६,८,३२, एजत्कः कम्पमानशीर्षः”

अप+अपगमने एङि पररूपम् अपेजते । कचिदन्तर्भूतण्यर्थेऽपि । “अपेजते शूरो अस्तेव शत्रून्” ऋ० ६,६४,३ “शत्रून् अपेजते अपगमयति भा० । उद्+ऊर्द्ध्वगतौ उदेजते । “उदेजतु प्रजापति र्वृषा शुष्मेण वाजिना अथ० ४,४,२, “उदेजयान् भूतगणानन्यवेधीत्” भट्टिः । प्र+प्रकर्षचलने पररूपम् प्रेजते । सम्+सङ्गतौ नियमेन चलने ‘एवेदनु द्यून् किरणः समेजात्” ऋ० १०, २७,५ । ‘समेजात् नियमेन प्रयाति” भा० ।

**एज** दीप्तौ भ्वादि० पर० अक० सेट् । एजति ऐजीत् । एजाम्-बभूव आस चकार । एजन् । [ युष्टे" अथ० १२,१,१८ ।

**एजथु** पु० एज-वा० भावे अथु । कम्पे "महानुवेग एजथुर्वेप-

**एजय** त्रि० एज-णिच्-खश् । कम्पके जनमेजयः अनङ्ग-मेजयः अरिमेजयः विश्वमेजयः ।

**एजि** त्रि० एज-इन् । वातरोगग्रस्ते ततोऽपत्ये कुर्वा० ण्य । ऐज्य तदपत्ये पुंस्त्री ।

**एज्य** त्रि० आ+यज-कर्म्मणि क्यप् । सम्यग्यजनीये "आय-जतामेज्या इष इति प्रजाया इषस्ता एवैतदायजते" शत० ब्रा० १,७,२,१५ ।

**एठ** बाधने भ्वादि० आत्म० अक० सेट् । एठते ऐठिष्ट एठाम् बभूव आस चक्रे । एठनम् एठितः । बाधनमत्र शाठ्यम्

**एड** पुंस्त्री इल-स्वप्ने अच् डस्य लः । १मेषे "श्वैडवराहेषूद भारा माचोद् विष्णुरिति" कात्या० २५,४,१८ । स्त्रियां जातित्वात् ङीष् २बधिरे त्रि० । एडमूकः ।

**एडक** पुंस्त्री० इल-ण्वुल् डस्य लः । १वनच्छागे, २पृथु-शृङ्गे मेषे ३मेषमात्रे च जातित्वात् स्त्रीत्वे अजादि त्वात् टाप् क्षिपकादि० नात इत्त्वम् एडका । एड इव प्रतिकृतौ कन् । मेषसदृशे दक्षिणापथप्रसिद्धे ४पशुभेदे । वर्त्तन्ते पशिसंघाश्च तथा पशुगवेडकम्" भा० व० १४२ अ० । तस्येदम् अण् । ऐडक तत्सम्बन्धिनि त्रि० स्त्रियां ङीप् । "अमैडकीरूर्णाः प्रक्षाल्य" कात्या० ५,३,७ । एडको नाम दक्षिणापथे मेषाकृतिः पशुः तस्येमाः ऐडक्यः" कर्क० "तयोर्मेषि मेष्यां च यद्यमैडकीरूर्णा विन्देत ताः प्रपिष्य निक्षिपेत्" शत० ब्रा० २,५,२,१५, एडकइवाचरति क्यच् एडकीयति उपसर्गस्यावर्णात् परस्य वा पररूपम् उपे(पै)डकीयति

**एडगज** पु० एडोमेष एव गज इव भञ्जकत्वादस्य । (दाद-मर्द्दन) चक्रमर्द्दे दद्रुघ्ने हस्ते अमरः । [ श्रुतिरहिते ।

**एडमूक** त्रि० श्रुतिरहितएडोबधिरश्चासौ मूकः । वाक्श्रुति-

**एडु(डू)क** न० ईड-(ऊ)उक उलूका० नि० गुणः । १अ-न्तर्न्यस्तास्थियुक्ते २अन्तर्न्यस्तकठिनद्रव्ययुक्ते च कुड्यतभि-त्तिमात्रे च । एडूकचिह्ना पृथिवी न देवगृहभूषिता:" भा० व० १० । तस्य पुंस्त्वमपि "एडूकान् पूजयिष्यन्ति वर्ज्जयिष्यन्ति देवताः" भा० व० १९० अ० । स्वार्थेऽण् । ऐडूकमपि वा० ओकः एडोकमपि तत्रैव द्विरूपकोषः ।

**एण** पुंस्त्री इ-ण तस्य नेत्त्वम् । कृष्णवर्णे मृगे । स्त्रियाम् ङीप् "तस्य स्तनप्रणयिभिर्मुहुरेणशावैः" रघुः । "अष्टा-वेणस्य मांसेन रौरवेण नवैव तु" मनुः । तस्य कृष्णत्व-मुक्तम् छन्दोग० "अङ्गुष्ठेमात्रमेणस्य एणः कृष्णमृगः स्मृतः । कृष्णगौरस्तथः प्रोक्तः शम्बरः शोण उच्यते" । "तं त्वेणकुणकं कृपणं स्रोतसानुह्यमानम्" भाग० ५,८,८ "एणकुणकं मृगशावकम्" श्रीधरः । एण्या क्रीतम् "एण्या ढञ्, पा० ढञ् । ऐणेय एणीक्रीते त्रि० । एणेन क्रीत-मित्यत्राणेव । ऐण तत्क्रीते त्रि० । स्वार्थे कन् । एणक तत्रैव शब्दरत्ना० । [ शब्दा० ।

**एणतिलक** पु० एणस्तिलकमिव चिह्नं यस्य । मृगाङ्के चन्द्रे

**एणभृत्** पु० एणं बिभर्त्ति भृ-क्विप् ईत० । चन्द्रे तस्य-मृगाङ्कत्वात् तथात्वम् ।

**एणीपचन** न० एणी पच्यते अत्र पच-आधारे ल्युट् "एणी-पाकाधारे देशभेदे तस्योपयोरवध्यत्वेऽपि तद्देशवासिभि-र्निषेधसल्लङ्घनात् तत्पचनात्तथात्वम् । तत्र भवः पक्षे छ । एणी-पचनीय तद्देशभवे त्रि० [ एणीपादाकारपादयुक्ते ।

**एणीपद** त्रि० एणयाः पादाविव पादावस्य अच् नि० पद्भावः ।

**एत** पु० इण-तन् । १कर्बुरवर्णे । २तद्वति त्रि० । तोपध-वर्णवाचित्वात् स्त्रियां ङीप् तस्य नश्च । "एन्यः शतल्याः" श्रुतिः "मैत्रावरुणयोऽस्यत एन्योमैत्राः" यजु० २४,८ । वर्णवाचिनि एते परे "वर्णोवर्णेष्वनेते" पा० एतशब्दपर्य्युदासात् तत्पुरुषे पूर्व्वपदं न प्रकृत्या । कृष्णैतः शुक्लैत इत्यादौ न प्रकृतिस्वरः । आ+इण-कर्त्तरि क्त । ३आगते त्रि० । "कया मती कुत एतास एतेऽर्चन्ति" ऋ० १,१६५,१ । "एतास आगताः" भा० सप्तो-भिरेता उपयुजमक्षे" ऋ० १,१६६,५ । "एतानागन्तृन्" भा०

**एतग्व** पु० एतवर्णोऽश्वः पृषो० । १चित्रवर्णाश्वे । "एतग्वा चिद्य एतशा युयोजते हरी" ऋ० ८,७०,७ । "एतग्वा एतवर्णावश्वौ" भा० । "पिपस्त्येतग्वा चिद्य सुयुजा युजानः" ऋ० ७०,७,२ । २अश्वमात्रे निघ० ।

**एतद्** त्रि० इण-अदि तुक् च । बुद्धिस्थे समीपवर्त्तिनि "इदमस्तु सन्निकृष्टं समीपवर्त्ति चैतदोरूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इत्युक्तेः समीपवर्त्ति-बुद्धिस्थोपलक्षितधर्म्मावच्छिन्ने एतदो वृत्तिः । क्रिया-विशेषणत्वेऽस्य क्लीवता "न वा उ एतन्म्रियसे" ऋ० १,१६२,२१ । अस्य सर्व्वनामकार्य्यम् । एते एतस्मै एत-स्मात् एतेषाम् एतस्मिन् एतस्या एतासामित्यादि । "एते वयममी दाराः" कुमा० । "देवा एतस्यामवदन्त पूर्व्वे" १०,१००,१४ । एष वै प्रथमः कल्पः" मनुः । "एतस्मि-

न्तरे दैवी" देवीभा० "एतान् महाराज ! विशेषधर्म्मान्" भु० त० पुरा० । "एषा तेऽभिहिता सांख्ये" "एतत्ते सर्वमाख्यातम्" गीता। अनुक्तौ तु "द्वितीयाटौस्स्वेनः" पा० एनम् एनौ एनान् एनेन एनयोः । "एनोनिवृत्तेन्द्रियवृत्तिरेनम्" रघुः । "महाशनोमहापाप्मा विद्ध्येनमिह वैरिणम्" गीता क्वचिदपि अनुक्तौ एनादेशः । इदं कुलं शोभते एनत्पश्य । परिमाणे वतु आदन्तादेशश्च । एतावत् एतत्परिमाणे त्रि० "एतावानेव पुरुषोयज्जायात्मा प्रजेति ह" मनुः "किं वैतावन्मात्रमुपजानीत" शत० ब्रा० १,६,१,४ । "एतावदुक्त्वा विरते मृगेन्द्रे" रघुः "एतावता नन्वनुमेयशोभि" कुमा० स्त्रियां ङीप् । "एतावती महिमा स बभूव" ऋ० १०,१२१,८। एतादि दृश–क्विन् कञ् टक् । आदन्तादेशः । एतादृश् एतादृक्ष एतादृश एतत्तुल्यदर्शने त्रि० तत्र क्विनन्तस्य झलि पदान्ते च कः "एतादृक्कृतागता कृतः" सा० द० । टगन्तस्य स्त्रियां ङीप् । "अस्थाने पतताऽतीव महतामेतादृशी स्यादगतिः" उद्भटः । तस्येदमित्यर्थे छ । एतदीय एतत्सम्बन्धिनि त्रि० । एतदात्मकः मयट् एतन्मय एतदात्मके त्रि० । परिमाणे मात्रच् । एतन्मात्र एतत्परिमाणे त्रि० स्त्रियां ङीप् । दिग्देशकालवृत्तेरस्मात् प्रथमापञ्चमीसप्तम्यर्थे त्रल् तसिश्च । एतत्र एतस् प्रथमाद्यर्थयुक्ततच्छब्दार्थदिगादौ अव्य० । अन्वादेशे "एतदोऽश् त्रतसोस्त्रतसौ चानुदात्तौ" पा० उक्तेः अशादेशे अत्र अतः इत्येवेति भेदः । [ र्त्तित्वात्तथा ।

**एतन** पु० आ+इण–तन । निश्वासे हेमच० । निश्वासस्य सन्तत-

**एतर्हि** अव्य० इदम्+काले र्हिल् "एतेतौ रथोः" पा० एतादेशः । अस्मिन् काले इत्यर्थे "अथ यो ऽयमेतर्ह्यग्निः स भीषा निलिल्ये" शत० ब्रा० १,२,३,१ । "एतर्हि खलु वा एतद्यज्ञमुखम्" तैत्ति० ।

**एतश** पु० इण–तशन् । १ब्राह्मणे उज्ज्व० २अश्वे निरु० । "येन सूर्य्यादेतशो ब्रह्मणस्पतिः" ऋ० १०,५३,९ । "वर्त्तत्मशोऽभिधीयसे" यजु० ४,२२ । "सजूः सूर एतशेन" १२,७४ । एतशेनाश्वेनेति" वेददी० "उभे चक्रे न वर्त्येतशम्" ऋ० ८,६,३८ ।

**एतशस्** त्रि० इण–तसुन् । १ब्राह्मणे २अश्वे च ।

**एदिधिषुःपति** पु० इण–क्विच् कर्म्म० पृषो० मध्ये सुट् । अग्रे दिधिषुपतौ । "निर्ऋत्यै परिविन्दानमाराद्ध्या एदिधिषुःपतिं निष्कृत्यै" यजु० ३०,९ । पुरुषमेधीयपशुदेवताभेदकीर्त्तने

**एध** वृद्धौ भ्वादि० आत्म० अक० सेट् । एधते ऐधिष्ट । एधाम्बभूव आस चक्रे । एधितव्यः एधनीयः एध्यः एधिता एधितः एधनम् एधः एधमानः एधित्वा समेध्य एधांसि । "हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते" मनुः । क्वचिदस्य आत्मभावः "यत् मैथुनेरेधिरे प्रजाः" भाग० ३,२१,१ । आर्षत्वात् समाधेयः "तपसा महतैधित" भा० आ० ८८३ । "विवर्द्धे ज्वलता इवैधमानाः" ७१,५५ । "लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम्" रामा० । क्वचित् पर० । "न हि मादृशकर्त्तारः सुखमेधन्ति भारत !" भा० व० २४५ अ० । णिचि एधयति ते ऐदिधत् त । "किं त्वं मामजुगुप्सिष्ठानैदिधः स्वपराक्रमम्" भट्टिः । उपसर्गस्यावर्णात् वृद्धिरेव न पररूपं प्रैधते एङादित्वे एव तथा तेन मा प्रैदिधत् इत्यादौ न वृद्धिः ।

**एध** पु० इध्यतेऽग्निरनेन इन्ध–करणे घञ् नि० नलोपगुणौ । काष्ठे "एधान् हुताशनवतः स मुनिर्ययाचे" रघुः "एधोदकं मूलफलमन्नमभ्युदितं च यत्" मनुः । "यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति" भा० व० ८४ अ० ।

**एधतु** पु० एध–कर्त्तरि चतु । १पुरुषे उज्ज्व० । २अग्नौ मे० ३वृद्धियुक्ते त्रि० शब्दर० भावे चतु । ४वृद्धौ स्त्री । "युवं श्रिया पुरुभुजेममेधतुम्" ऋ० ८,८६,३, "एधतुं धनादिवृद्धिम्" भा० "तं हैतामेधतुमेधाञ्चक्रिरे" शत० ब्रा० ६,२,३, "एतामेधतुमृद्धिम्" भा० ।

**एधस्** न० इध्यतेऽग्निरनेन इन्ध–असि नि० नलोपगुणौ । काष्ठे "यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन !" गीता । "अनलायागुरुचन्दनैधसे" रघुः । "फलैधः कुसुमस्तेयमधैर्य्यञ्च मलावहम्" "यथैधस्तेजसा वह्निः" मनुः ।

**एधा** स्त्री एध भावे अ । समृद्धौ अमरः

**एधित** त्रि० एध–कर्त्तरि क्त । १वृद्धे णिच्–कर्म्मणि क्त । २वर्द्धिते त्रि० । "मधुसमृद्धिसमेधितमेधया" माघः ।

**एनस्** न० एति गच्छति प्रायश्चित्तेन क्षमापणेन वा आगसि अर्थे इण–असुन् नुट् च । १अपराधे । ईश्वराज्ञालङ्घनरूपानिषिद्धाचरणापराधजन्यत्वात् २पापे च । "एनोनिवृत्तेन्द्रियवृत्तिरेनम्" । "अकामोपनतेनेव साधोर्हृदयमेनसा" । "एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम्" मनुः । पापभेदाश्च प्रा० वि० दर्शिताः यथा "अथ पापोद्देशः । तत्र विष्णुः "अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति परिग्रहप्रसङ्गाद्विशेषेण महाम्भिघ्रस्तेनायमाक्रान्तोऽतिपातक

निष्कर्ष स्थापयेद्दिजशक्तितः । शूकरेण हते दद्यान्म-हिषं दक्षिणान्वितम् । क्रमिभिश्च मृते दद्याद्गोधूमान्नं द्विजातये । दंष्ट्रिणा च हते दद्याद्वृषभं वस्त्रसंयुतम् । शकटेन मृते दद्यादश्वं सोपस्करान्वितम् । भृगुपाते मृते चैव प्रदद्याद्धान्यपर्व्वतम् । अग्निना निहते दद्यादुपानह्रं स्वशक्तितः । द्रवेन निहते चैव कर्त्तव्या सदने सभा । शस्त्रेण निहते दद्यान्महिषीं दक्षिणा-न्विताम् । अश्मना निहते दद्यात् सवत्सां गां पय-स्विनीम् । विषेण च मृते दद्यान्मेदिनीं क्षेत्र-संयुताम् । उद्बन्धनमृते चापि प्रदद्याद्गां पयस्विनीम् । मृते जलेन वरुणं हैमं दद्यात्त्रिनिष्ककम् । वृक्षं वृक्षहते दद्यात् सौवर्णं स्वर्णसंयुतम् । अतीसारमृते लक्षं गायत्र्याः संयतो जपेत् । शाकिन्यादिमृते चैवं जपेद्रुद्रं यथोचितम् । विद्युता निहते चैव विद्यादानं समाचरेत् । अस्पर्शे च मृते कार्यं वेदपारायणं तथा । सच्छास्त्रपुस्तकं दद्याद्दान्त-माश्रित्य संस्थिते । पातित्येन मृते कुर्य्यात् प्राजापत्यानि षोड़श । मृते चापत्यरहिते कृच्छ्राणां नवतिञ्चरेत् । निष्कत्रयमितं स्वर्णं दद्यादश्वं हयाहते । कपिना निहते दद्यात् कपिं कनकनिर्म्मितम् । विसूचिकामृते स्वादु भोजयेच्च शतं द्विजान् । तिलधेनुः प्रदातव्या कण्ठेऽन्नकवले मृते । केशरोगमृते चापि अष्टौ कृच्छ्रान् समाचरेत् । एवं कृते विधाने तु विद्यात्तदौर्द्ध्व-देहिकम् । ततः प्रेतत्वनिर्म्मुक्ताः पितरस्तत्पितामहास्तथा । दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसम्पदः” इत्य० ।

भृगुभारतसंवादे रोगादिरूपकर्म्मविशेषविपाक उक्तो यथा-

१सर्व्वशेषः “वातपित्तादिभिर्दोषैर्यदुत्पन्नं प्रशाम्यति । अगदेन सुवैद्येन कर्म्मजं नोपशाम्यति । तस्मात् कर्म्म परि-ज्ञाय प्रायश्चित्तं करोति यः । स तु दोषैर्विनिर्म्मुक्तो भोगीव कञ्चुकोज्झितः । भवतीह पवित्रोऽपि मनुजो निरुपप्लवः । निशम्य तस्य तद्वाक्यं प्रणम्य स महा-मतिः । कृतकर्म्मोपशमनं विस्तरेण महामते ! । वदस्व मुनिशार्द्दूल ! नान्यो वक्ता त्वया विना । मुनिरुवाच । धर्म्माधर्म्मसमायुक्ता लोभमोहसमावृताः । भवन्ति मानवाः सर्व्वे विष्णुमायावगुण्ठिताः । स्वकर्म्म-वशमासाद्य पतन्ति निरये नराः । ततो जन्म समा-साद्य व्याधिं कर्म्मानुरूपतः । अवाप्य परितप्यन्ति पीड्य-मानाः समन्ततः । देवद्रव्यविनाशेन गुरुद्रोहादि कर्म्मभिः । क्रमात् सर्व्वेषु पच्यन्ते नरकेष्वा महो-च्छयात् । महापातकिनश्चापि सर्व्वेषु नरकेष्विह । आचन्द्रतारकं यावत् पीड्यन्ते विविधैर्गदैः । उप-पातकिनश्चापि तदर्द्धमिह मानवाः । शेषैः पापैस्तद-र्द्धञ्च कालं प्राप्य विशेषतः । अथाधःपततां पुंसा-मधर्म्मः परिकीर्त्तितः । नरकाब्धौ महाघोरे पतनात् पापमुच्यते । तस्मात् पापेषु दुःखानि तीव्राणि सुबहून्यपि । तस्मात् पापं न कर्त्तव्यमात्मपीडाकरं यतः । कर्म्मानुसारि नरकं भुक्त्वाशेषं व्रजन्ति वै । भूमौ वृक्षलतागुल्मपशुपक्षिमृगादिभिः । प्रत्यक्षं नरकं भुक्त्वा मानुषत्वं प्रपद्य च । तद्व्याधि-लक्षणं सर्व्वं संप्राप्य परितप्यते । पूर्व्वजन्मकृतं पापं व्याधिरूपेण बाधते । तस्योपशमनं कार्य्यं मन्त्र-दानार्च्चनादिभिः । प्रायश्चित्तमकृत्वा तु न कुर्य्यात् कर्म्म किञ्चन । अनिस्तीर्णमघं नित्यं वर्द्धते द्विगुणं पुनः । देवद्रव्यं द्विजप्राप्तं ब्रह्मस्वं ब्राह्मणस्त्रियः । द्रोह एषां न कर्त्तव्यस्त्वधोगतिभयात् सदा । स्वर्ण-स्तेयी गुरोः शय्याशायी मद्यस्य भोजकः । ब्रह्महापि च तेषां वै संसर्गी चापि पञ्चमः । गर्भपातकरः षष्ठः कन्यादूषी च सप्तमः । स्त्रीबालघातकश्चापि नवमो न्यासहृत्तथा । विश्वासघातकश्चैव दशमः परिकीर्त्तितः । एते दशविधा घोरास्तदन्य उपपा-तकाः । यत् पापं ब्रह्महत्याया द्विगुणं गर्भपातने । प्रायश्चित्तं न तस्यास्ति देहत्यागो विधीयते । कृतदोष-सहस्राणां योषिद्‌द्विजतपस्विनाम् । न बधो नाङ्ग-विच्छेदो देशत्यागो विधीयते । नैते दण्ड्या महीभर्त्तुर्यमस्य विषयङ्गताः । दण्डयन् दोषमाप्नोति तस्माद्राजा परित्यजेत् । यथापराधतो राजा शास्ता भवति शास्त्रतः । न तस्य कुरुते शास्तिं यमो मर्त्त्येषु शासिता । अज्ञात्वा धर्म्मशास्त्राणि प्रायश्चित्तं वदन्ति ये । प्रायश्चित्तं भवेत्तेषां महापातकिनश्च ते । तस्माद्विमृश्य वक्तव्यं धर्म्मशास्त्रानुसारतः । ये विप्रान्न नमन्ति नैव च गुरुं ये चाथ कर्म्मोज्झिता, ये शास्त्रोक्त विवर्जिता जनपदानां तापकाः पापिनः । ये वैद्यान् गणकान् ग्रहांश्च सुहृदः सन्मार्गगान् ये सदा, निन्दन्त्येव महापदं गदभयं विन्दन्ति ते दुःखिताः । ये नमन्ति-द्विजतीर्थमादरादौषधञ्च भिषजः प्रतिक्षणम् । दृष्टमन्त्र-मखदानजं फलं ते भवन्ति निरुजो निरापदः । व्याधे-र्य्यदा गदविखण्डनभेषजाद्यैर्दोषो न याति शमनं

सुरतप्रयोगैः । तं पूर्व्वजन्मजनितं तु विमृष्य सम्यक् कार्य्या सभा तदुपदिष्टयथोक्तशान्तिः” १ अ० ।

२ नपुंसकता “साध्वी यौवनसम्पन्ना त्यक्ता दोषैर्व्विहीनकृता । तेन दोषेण राजेन्द्र ! नपुंस्त्वमनुगच्छति । मुष्कच्छेदनकर्त्तुस्तु सोऽपि षण्डत्वमश्नुते । रजस्वलाम् स्थितां भार्य्यां सन्निधौ यो न गच्छति । षण्डत्वन्तु भवेत् तस्य जन्म चासाद्य भूपते !”।

३ अल्पायुःप्रजता “शृणु विप्र ! पुरा स्नातुं गतस्त्वं सरितस्तटम् । गावः कतिपयास्तत्र तृषार्त्ता वारितास्त्वया । तस्य विप्रस्य पाकोऽयं जायन्तेऽल्पायुषः प्रजाः” ।

४ अकिञ्चनता “अदाता निष्ठुरो जातः स च धर्म्मस्य निन्दकः। महाधनो न देवाग्निं ब्राह्मणं तोषयन् पुरा । आयुःशेषे मृतिं प्राप्य गृहीतो यमकिङ्करैः । बद्धा पाशेन संनीतो यत्रास्ते धर्म्मराड्विभुः । चित्रगुप्तेन तत्पापं विज्ञतञ्च यमाज्ञया । तेन मर्त्त्ये महाद्रेन हुतं दत्तं न किञ्चन । लोलाख्यस्य नरकस्य विषयेऽयं द्विजो भवेत् । ब्राह्मणः किङ्करैर्नीतो निःक्षिप्तो नरकार्णवे । लोलाख्यनरके घोरे सर्व्वप्राणिभयङ्करे । लोलाख्यनरकस्येह लक्षणं त्वमतः शृणु । सर्व्वत्र दर्शयेत् सर्व्वं भक्ष्यपानादिकं ततः । मृगतृष्णाजलाकारं दृश्यते न तु लभ्यते । नैराश्यं प्राप्य विवशः क्षुत्पिपासासमाकुलः । बहुकालन्तु विविधं भुक्त्वा जन्म प्रपद्य च । अकिञ्चनत्वमासाद्य महाक्लेशञ्च विन्दति । अत्यर्थं कदन्नं भुङ्क्ते कदन्नमति दुर्लभम् । स तु भिक्षाटनेनापि जीर्णाम्बरधरः सदा”

५ वियोगः “अयं दुष्टो दुराचारं दुष्टबुद्ध्या चकार यत् । स्नेहभेदकरो यस्मात्तस्माद्दण्ड्यो यमस्य हि । इत्युक्त्वा शृङ्खलैर्बद्धा ताडयित्वा भृशं बहु । नीत्वा नियोगिनस्तत्र यत्रास्ते दण्डनायकः । दृष्ट्वा तं चित्रगुप्तेन तत्पापं प्रकटीकृतम् । व्यामोहके तु नरके पातितो दुर्म्मतिर्न्नृप ! । व्यामोहकस्य यच्चिह्नं मानं वक्ष्याम्यशेषतः । व्यायामः सप्ततिस्तस्य योजनं दुर्व्वहं परम् । कुम्भाकारं निराकारं धूमोघव्याप्तमन्तरम् । वायोर्गतिर्न्न तत्रास्ति न च रश्मिर्विभास्वतः । मूढस्य पतनं तत्र यस्य मैत्रीविभेदकः । ज्ञात्वा मन्त्रस्य निष्पाद्यं विमन्त्वं यो विधास्यति । सोऽपि मृत्युवशं प्राप्य मोहकाख्यञ्च गच्छति । मिथ्यापवादमन्येषां यः करोति वृथामतिः। तस्य मिथ्याभिशंसेन मोहकाख्ये गतिर्भवेत् । यानि मिथ्याभिशंसेन पतन्त्यश्रूणि रोदनात् । तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् । मोहकाख्ये महाघोरे पतन्त्य ते दुराशयाः । पूर्व्वापरपरिज्ञानविहीनः परिहस्य च । एवमेतत् सहस्राणि वर्षाणि च चतुर्दश । भुक्त्वा मृगतनुं प्राप्य मृगादिहसमाकुलः । व्यापादितोऽन्यशंसेन नरशोकसमावृतः । मृगयूथपरित्यक्तस्त्वेकाकी तिष्ठते पुनः । सोऽपि मृत्युवशं प्राप्य मत्स्ययोनौ प्रजायते । ततोमानुष्यमासाद्य वियोगे परितप्यते”।

६ नेत्रामयः । “पुरा विप्र ! गृहस्थस्य दीपस्य हरणं कृतम् । तत्र पुत्रेण भो विप्र ! तेन काणत्वमस्य वै । कोटरीञ्च प्रपश्येद्यः सतीं वापि पराङ्गनाम् । सकामः कामतो मोहाद्रतिमालक्ष्य पश्यति । सोऽपि नेत्रामयं प्राप्य सीदतीह स्वकर्म्मतः । सभ्यं निरयं घोरं संप्राप्य कदनं बहु । भुक्त्वा जन्म समासाद्य दुष्कर्म्मसमुद्भवाम् । मानुषीन्तु तनुं प्राप्य निष्कृतिं न करोति यः । पुनर्जन्म समासाद्य प्राप्तं कर्म न मुञ्चति” ।

७ कुब्जत्वम् । “देवताप्रतिमां दृष्ट्वा यस्तां नैवाभिवादयेत् । ब्राह्मणञ्च गुरुं श्रेष्ठं ब्रह्मचारितपस्विनम् । श्मशाने जायते वृक्षः काकगृध्रोपसेवितः । भुक्त्वा कालमशेषञ्च मानुषत्वमवाप्य सः । कुब्जत्वमश्नुते तस्मात् कर्म्मणो मानुषो ध्रुवम्” ।

८ खञ्जत्वम् छिन्नपादत्वञ्च “उपानहं हरेद् यस्तु तथैव काष्ठपादुकाम् । तप्तवालुकदुर्भेद्यमङ्के प्राप्य च सीदति । स नीतोयमदूतैश्च ताड्यमानो भृशं मुहुः । प्रवेश्य दक्षिणं द्वारं बद्धा पादद्वये दृढम् । हाहाकारस्तु सर्व्वत्र श्रूयते यत्र भीषणः । नीत्वा यमाज्ञया दूतै रौरवे च निवेशितः । रौरवस्य च यन्मानं तन्मे निगदतः शृणु । लक्षयोजनविस्तीर्णं गभीरं खाद्दिगावृतम् । दह्यमानस्तु तत्रैव पतितः पुनरुत्थितः । पुनः पतति तत्रैव क्रन्दमानो मुहुर्मुहुः । अनेककालमासाद्य पारं प्राप्य सुदुःखितः । मानुषीं योनिमासाद्य खञ्जपादो भवेन्नरः । श्लीपदी(छिन्नपादता)व्याधिसंयुक्तो भवेज्जन्मनि जन्मनि” ।

८ क्लिन्नघ्राणता “श्रुतिस्मृतिकथायान्तु यस्तत्र विघ्नमाचरेत् । देवद्विजातिधर्म्मस्य सदा यो देवनिन्दकः । सोऽपि मृत्युवशं प्राप्य यत्र याति च तत् शृणु । नैर्ऋते पश्चिमे भागे पिङ्गला नाम या पुरी । पिशाचा यत्र तिष्ठन्ति सोऽपि तत्र स्वकर्म्मतः। यमाज्ञया तत्र नीतो रक्षितस्तत्र दुर्म्मतिः । तत्र दुःखं महाघोरं भुक्त्वा कर्म्मा-

न्तरे पुनः । मानुषत्वमनुप्राप्य छिन्नप्राणोह्यशोभनः । स निन्द्यः सत्सभामध्ये न प्रवेश्योभवेद्धि सः" ।

१०छिन्नहस्तता छिन्नपादता च"अतः परं छिन्नहस्तोयतो भवति मानुषः। शृणुष्व तत् प्रवक्ष्येऽहं स्वकर्म्मवशतश्च सः। पिता माता गुरुर्वृद्धः क्रोधाविष्टेन ताडितः । विनाऽपराधतो जन्तुं योवा हन्याद्विमोहितः । यमलोके वसेत् सोऽपि छिन्नहस्तो भवेदिह । करेण ताडनाच्छिन्नपाणिर्भवति पामरः । पादेन छिन्नपादस्तु मर्त्योवै जायते ध्रुवम्" ।

११ छिन्नकर्णता । "मिथ्यापवाददुष्टस्य येन तापः परोभवेत् । मानुषस्य, ततोदुष्टाः श्रावयन्ति महीपतिम् । ते क्रूराश्छिन्नकर्णाश्च जायन्ते पृथिवीतले" ।

१२ कराङ्घ्रिहीनता । "सैन्ययोरुभयोर्यत्र संग्रामे घातिदारुणे । स्वामिनं सङ्कटे त्यक्त्वा ये भग्नाः पापबुद्धयः । स मृतो गृह्यते दूतैर्भीषणैर्विकटाननैः । पूतिगन्धवृतैः पाशैर्नीयते यमसादनम् । तर्ज्यमानः शरैः खड्गैः कूटमुद्गरपाणिभिः । यमाज्ञाकारिभिस्तैस्तु पात्यते नरकं शृणु । असिपत्रवनं घोरं नरकं शतयोजनम् । योजनायुतगम्भीरं ज्वलत्खड्गसमाकुलम् । पात्यन्ते तत्र तैः खड्गैः शितधारसमाहितैः । ये भग्नाः स्वामिनं त्यक्त्वा मित्रं प्राप्य च मानुषाः । क्रन्दमानाश्च तिष्ठन्ति यावदाभूतसंप्लवम् । कर्म्मावसाने जायन्ते मानुषत्वमतः परम् । कराङ्घ्रिभ्यां विहीनस्तु दुष्टजीवः प्रवर्त्तते । नास्त्यस्य कर्म्म संप्रोक्तं येन मुक्तो भवेन्नरः । जन्मजन्मनि जायन्ते छिन्नाङ्घ्रिकरवेदनाः ।

१३ प्रसङ्गात् युद्धकर्म्मविपाकः "अतःपरन्तु ये शूरास्तेषां माहात्म्यमुत्तमम् । लोकमात्रमतस्तात ! शृणुष्व गदतोमम । विद्रुतेषु च सैन्येषु सङ्कटेषु समन्ततः । नृपं प्रति यदा गच्छेत् सा यात्रा क्रतुभिः समा । ललाटदेशे रुधिरं स्रवञ्च यस्यापि वक्त्रे पततीह किञ्चित् । तत् सोमपानेन हि तस्य तुल्यं संग्रामयज्ञे मघवाऽप्युवाच । शूरस्त्वेयस्य गात्राणि शरखड्गादितोमरैः । भिन्दन्ति न यमः शक्तोग्रहीतुं पुण्यभाजनम् । अश्वोपरि च यः शूरः प्राणांस्त्यजति घातितः । तिस्रः कोट्योऽर्द्धकोटी च द्विगुणं कालतस्तु सः । अप्सरोभिः सेव्यमानोदिव्यलोकमवस्थितः । तमेव पुरुषं प्राप्य दृष्ट्वा सर्व्वाः सुराङ्गनाः । विमानस्थाः समस्ताश्च गायमानाः परस्परम् । परित्यज्य सुरान् यान्ति स्वामिनं प्राप्य हर्षिताः" ।

१४यक्ष्मरोगः "अशस्त्रः पुरुषो येन सशस्त्रेण हतो रणे । तत्कर्म्मणः परिणामं विस्तरेण शृणुष्व वै । त्यक्त्वास्त्रहत्यादोषेण यमस्य पुरुषैर्भृशम् । आयुःशेषेऽथ संगृह्य यमदूतैर्भयानकैः । तस्मिन् मार्गे दुराधर्षे नीत्वाऽऽज्ञाभियमस्य च । रुरुकाख्ये महाघोरे निरये च वसेद्धि सः । प्रक्षिप्तश्चिरकालन्तु महादुःखेन पच्यते । ततो रासभयोनौ स जायते वै स्वयं नरः । ततो मृगस्ततो व्याघ्रस्ततः शस्त्रेण हन्यते । सारमेयत्वमासाद्य मत्स्ययोनौ प्रजायते । तस्माद्वै मानुषीं प्राप्य यक्ष्मरोगेण गृह्यते" ।

१५वैधव्यम् "विरूपं स्वामिनं दृष्ट्वा यौवनेनातिगर्व्विता । दिवा निन्दति दुर्व्वाक्यैः शय्यां न भजते निशि । तेन दोषेण भो देवि ! वैधव्यं त्वमपाश्रिता । आसन्ना रमणी या च स्वामिनं भजते न हि । सा वैधव्यमवाप्नोति दरिद्रं यावमन्यते । तस्य दोषस्य पाकोऽयं देवि ! वैधव्यमागता" ।

१६बन्ध्यता "पयःपातुमना वत्सस्त्वया पूर्व्वं निवारितः । पुरुषो बन्ध्यतां याति वीर्य्यविक्रमदोषतः । अदत्त्विणं व्रतं कृत्वा बन्ध्यत्वमनयोर्भवेत् । अदैवतं मिष्टफलं यो भुङ्क्ते प्राप्यलोभतः । सोऽपि बन्ध्यत्वमाप्नोति कथयामि ततः शृणु । दृष्ट्वा तु मैथुनीभावं विघ्नं तु कुरुते च यः । सोऽपि बन्ध्यत्वमाप्नोति सर्व्वजन्मनिजन्मनि ।

१७गर्भस्रावः "त्रेतायुगस्य मध्ये तु सञ्जयोनाम भूपतिः। तस्य भार्य्याद्वयं जातं सुमित्रा नन्दिनी तथा । नन्दिनी सुभगा तस्य सुमित्रा या यशस्विनी । प्रसूता सा स्वपुत्रेण तेन पत्या सुमानिता । सापत्न्यपरुषाविष्टा नन्दिनी नीतिवर्जिता। शून्यालये च सहसा छद्मनाऽऽनीय तं सुतम् । शतधा खण्डकं कृत्वा तैलपाके विचिक्षिपे । सानेन विधिना राजन् ! दुष्टमत्या निजेच्छया । चकार दारुणं कर्म्म तत्फलं शृणु भूपते ! । सा कालवशमासाद्य बालघाताभिदोषतः। गृहीत्वा निष्ठुरैर्बद्धा पाशेन यमकिङ्करैः । नीत्वा निरयमध्ये तु सा प्रक्षिप्ता दुराशया । कर्म्मान्ते कोकिला नाम वैश्यस्य च सुताऽभवत् । भूयोपि विश्वावसुना परिणीता गृहाश्रमे । सर्व्वद्रव्यसमायुक्ते दासदासीसमाकुले । सा पुनः पञ्चमे मासि तृतीये वा चतुर्थके गर्भस्रावोऽभवत् तस्यास्तेन दुःखेन दुःखिता" ।

१८मृतभार्य्यता "अतिक्रम्य त्वया ज्येष्ठं भ्रातरं चात्मनः कृतः । पुरा परिणयस्तेन मृतभार्य्यत्वमागतः । सप्तम्यां यः स्पृशेत्तैलं ज्येष्ठा भार्य्यास्य नश्यति" ।

१९बहुपुत्रता अपुत्रता च } "गवीमुखाद्वहिष्कृत्वा यस्तु द्रव्यं हरेत् पुनः शृणु तस्य यथा पापं कथयामि तथाग्रतः ।

निर्ज्जने दुर्व्वहे घोरे शिलताडे महत्स्थले । क्रमिर्भूत्वा वसे-
त्तत्र क्षुत्पिपासासमाकुलः । मन्वन्तरत्रयं तत्र ततोनीहा-
रसंज्ञके । शीर्य्यमाणस्तु निश्चेष्टः शीतवातार्द्दितो भृशम् ।
कल्पमानन्तु दुःखेन मानुषोजायते ततः । बहुपुत्रो-
भवेत् सोऽपि पुत्रं न लभते हि वा ।

२०दौर्भाग्यम् "तृतीयासु च सर्व्वासु तैलस्पर्शस्त्वया कृतः ।
दुर्भगत्वञ्च ते जातं न तापं कुरु सुन्दरि !" ।

२१सापत्न्यम् । "शृणु देवि ! प्रवक्ष्यामि यत्तु सापत्न्यसम्भ-
वम् । दुःखं सुपरमं स्त्रीणां स्वकर्म्मवशतः खलु ।
मिथ्यावाक्यप्रवादेन विवादं कुरुते तु या । अन्योन्य-
स्नेहवैषम्यं कारयित्वा व्रजेदधः । कर्म्मानुयायिनी-
भूत्वा जीवेद्वर्षचतुष्टयम् । ततः पुनरसौ दीना दैवाद्भवति
मानुषी । सापत्न्यं प्राप्य सन्तप्ता चित्तपीड़ासमन्विता ।
भवतीति न सन्देहस्तस्य दानमतः शृणु" ।

२२जात्यन्तरम् "शृणु देव ! प्रवक्ष्यामि येन जात्यन्तरं गतः ।
मनुष्यो दुःखमाप्नोति भवेद्वै गर्हितो जनः । पुरा राजकुले-
जातो विश्वसेनेति नामतः । एकदा ब्राह्मणी रम्या
यौवनस्था तपस्विनी । पुष्पार्थिनी पुष्पवनं गता दृष्टाथ
तेन सा । कामवाणार्द्दितेनाथ बलात्कारेण धर्षिता ।
हृद्रोगेणाभिसंतप्ता ततः स्वभवनं गता । अत्रान्तरे गृहं तस्या
भिक्षुरेकः समागतः । धर्षिता सापि तन्वङ्गी भिक्षवेऽन्नं
ददौ मुदा । इदं कृतं तया पापं शृणु तस्य फलं तथा ।
तत्कर्म्मवशमासाद्य यमस्य विषयङ्गता । पुनर्जन्म
समासाद्याऽभवन्म्लेच्छकुलोद्भवा । म्लेच्छयोनिं परित्यज्य
ततः कैवर्त्तयोनिजा । एवं बहुविधां योनिं समासाद्य
द्विजाङ्गना । अमेध्यान्नञ्च यतये दत्त्वा प्राप गतिं नृप ! ।
मनुष्योदुःखमाप्नोति स भवेद्गर्हितोजनः"

२३मूकत्वम् "पुरा देवाप्यतो राजन् ! गायमानो द्विजः कश्चित् ।
नृत्यंश्च प्रब्रुवन् वाक्यैर्हास्ययुक्तैश्च निन्दितः । तस्य विप्रस्य
पापोऽयं न वाक् प्रसरते मुखात् । नृत्यमानन्तु देवाग्रे
गायमानं प्रदृश्य च । नोपहासं प्रकुर्व्वीत महादोषो-
भवेद्यतः" ।

२४गद्गदवचनता "अतःपरं महाभाग ! गद्गदत्वेन दूषिताः ।
भवन्ति मानवा मर्त्त्ये तच्छृणुष्व वदामि ते । जिगीषाकृष्ट-
हृदयोर्विवादं प्रकरोति यः । गुरोर्निन्दाञ्च मूर्खत्वादस्य
पापमतः शृणु । यमलोके तु तत्रैव कुट्यते निशितैः
शरैः । जिह्वापि किङ्करैः क्रूरैरजस्रं तस्य दोषतः ।
अयुतकालपर्य्यन्तं दुःखं प्राप्य महत्तरम् । मानुषत्व-
मनुप्राप्य गद्गदो जायते नरः । ततो गद्गदया वाण्या
मर्त्त्यः सीदति सर्व्वदा" ।

२५मुखरोगः । "पितृदेवगुरोर्निन्दां ये वै मिथ्या वदन्ति च ।
अभक्ष्यभक्षका ये च ते वै मुखगदार्द्दिताः । भवन्ति
नरकस्यान्ते मानुषास्तस्य निष्कृतिम् शृणु वच्म्यामि
भूपाल

२६कर्णरोगः । "असम्यङ्गन्तु यच्छृण्वन्ति पापमन्तर्गतन्तु यत् ।
समाकर्ण्यापि मनुजः कर्णरोगी भवेत् सदा । कर्णमूलं
भवेदेवं पूयशोणितसम्भवम् । कर्णरोगमिति ख्यात-
मवाप्य परितप्यते" ।

२७दुर्गन्धगात्रता । "चोरयित्वा तु गन्धाढ्यं द्रव्यं लोभपरा-
यणः । पच्यते नरके घोरे मूत्रविष्ठासमाकुले । अप्र-
तिष्ठेऽतिदुर्गन्धे दिव्यवर्षायुतत्रयम् । मर्त्त्ये तु शशको
भूत्वा जीवेद्वर्षचतुष्टयम् । ततोमृगस्तु सौगन्धो भूत्वा
शस्त्रेण हन्यते । दुर्गन्धेन समायुक्तो मानुषत्वमवाप्य सः ।
स्वकर्म्मवशतो राजन् ! दुर्गन्धं गात्रमश्नुते" ।

२८दारिद्र्यं विरूपता च । "पुरा सहस्रस्कन्दपतेरमात्यो मा-
सता शृणु । दानविघ्नः कृतस्तेन पाकोऽयं नान्यथाऽभवत् ।
मा ददस्वेति यो ब्रूयाद्देवाग्निब्राह्मणेषु च । स नरकस्य
पाकेन दरिद्रत्वेन दृश्यते । दरिद्रः कुरुते पापं पापाद्-
याति यमालयम् । पुनरावृत्य पापेन दारिद्र्येणाभिदृश्यते ।
न क्षयोऽस्ति च पापस्य तस्मात् पापं त्यजेत् सुधीः ।
अदाता च भवेत् सोऽपि विरूपश्चापि दुर्व्विधः । तस्मात्
कर्म्म परिज्ञाय दानं दद्यात् स्वशक्तितः" ।

२९सस्वेदपाणिपादता "चोरयित्वा तु लवणं मृतः क्षाराब्धि-
संज्ञके । नरके पच्यते पश्चान्मानुषत्वमवाप्य सः । तस्य
कर्म्मभवं चिह्नं जायते हस्तपादयोः । सस्वेदं सर्व्वदा
तस्य निष्कृतिं त्वमतः शृणु ।

३०दाहज्वरः "पुरा येन गृहं ग्रामः क्षेत्रं दग्धन्तु वह्निना ।
स मृतो रौरवं प्राप्य पीड्यमानः स्वकर्म्मणा । खदिरा-
ङ्गारवह्नीप्रज्वालामालावगुण्ठिते । पतितस्तिष्ठते तत्र
वर्षायुतशतत्रयम् । कर्म्मान्ते मानुषीं योनिमवाप्य परि-
दह्यते । ज्वरदाहेन घोरेण येन शाम्यति तच्छृणु" ।

३१अग्निमान्द्यम् "कश्मलं नाम नरकं पूयशोणितसंप्लुतम् ।
विष्ठारक्तचदयकं महामोहसमाकुलम् । तिष्ठन्ति पापिन-
स्तत्र द्विजपाकस्य विप्लवात् । ततो मानुषतां प्राप्य भुक्त्वा
पापं सुदुष्करम् । अग्निमान्द्यं भवेत्तस्य निष्कृतिं
कथयामि ते ।

२२अजीर्णरोगः"त्वया कृतं पुरा कर्म यद्युक्तञ्च तच्छृणु । कृत्वा पाकञ्च पाकाग्निं शमयित्वा जलेन च । भोजनञ्च कृतं तस्मादजीर्णत्वमुपागतः"।

२३अतीसारः"अथातीसारो राजेन्द्र ! जायते येन कर्म्मणा । देहिनां दोषदुष्टेस्तः प्रयास्यति यतः शृणु । अत्यन्तगुप्तं पापिष्ठं निरुच्छ्वासकनामकम् । सोपद्रवञ्च नरकं विषमोपद्रवाकुलम् । निर्वातमूष्मणा युक्तं दंशकादिपरिप्लुतम् । पच्यन्ते पापिनस्तत्र वर्षलक्षायुतत्रयम् । यज्ञाग्निदूषका ये च ये च दानविलोपकाः । परस्त्रीकामं चौर्य्येण यातयन्तीह तेऽधमाः । नरकान्ते मत्स्ययोनौ भूत्वा वर्षत्रयं पुनः । मानुषत्वमनुप्राप्य अतीसारेण गृह्यते" ।

२४ग्रहिणी "अत्यर्थं संचयं ये च कुर्वन्ति धनलुब्धकाः । न ददति न चाश्नन्ति हव्यं कव्यञ्च किञ्चन । तथा गोभूमिहर्त्तारो निष्ठुरा ये च दम्भकाः । अदुष्टाऽपतितां भार्यां यौवने यः परित्यजेत् । स नरः पच्यते राजन् ! स्वकर्म्मवशतः शृणु । नरकञ्च पूरीषाख्यं प्रज्वयानलपीडितम् । कल्पकोटिशतं तत्र दह्यन्ते पापदेहिनः । नरकान्ते गजयोनिं म्रियते प्राप्य बन्धनात् । तस्मात् मानुषीं योनिं ततः प्राप्यावसीदति । ग्रहणीरोगवान् भूत्वा पशुद्रव्यधनादिकम् । प्राप्यते विविधैर्दुःखैस्तस्य वक्ष्यामि निष्कृतिम्"।

२५पाण्डुरोगः"शृणु राजन् ! प्रवक्ष्यामि पाण्डुरोगोद्भवो यतः । परभार्य्यारतोयश्च नरकं यान्त्यआरतः । स नरः किङ्करैर्याम्यैर्बद्धः श्रृङ्खलया दृढम् । निष्ठुरैस्ताड्यमानस्तु क्रन्दमानो लुठन्मुहुः । शोच्यमानः स्वकं कर्म्म प्रपतंश्च पदेपदे । संयमन्यां प्रवेशेन दक्षिणद्वारिभीषणे । यमनाथं समानीय परभार्य्याभिमर्दकम् । ततोऽसौ यमदूतोऽपि दृढं बद्धा निरन्तरम् । तं दृष्ट्वा चित्रगुप्तेन पापकर्मानुसारतः । प्रत्यक्षञ्चावदत् सर्व्वं दुश्चेष्टादिकमस्य वै । कथितोऽयं दुराचारः परस्त्रीरमणप्रियः । नयस्व नरकं भीमं ज्वलन्तीमायसीं स्त्रियम् । भयमालिङ्गनञ्चास्य कारयन्ति यमाज्ञया । वर्षायुतसहस्रं हि परं तापञ्च विन्दति । पुनः स्वकर्म्मपाकेन ज्वलदग्निमये ह्रदे । विक्षिप्तो दह्यते तत्र वेद्यमानः स्वकर्म्मणा । वर्षलक्षसहस्राणि नव सप्तायुतानि च । तस्माद्विनिपथं गत्वा मानुषत्वमवाप्य च । पाण्डुरोगमनुप्राप्य शोषयेताः प्रपद्यते" ।

२६कामला "भक्तादीनान्तु चौरा ये गतिं तेषां ततः शृणु । आयुःशेषे तु ते याम्यैर्गणैर्नीता यमाज्ञया । घोरा पुरीति विख्याता पिङ्गला नाम दुस्तरा । पिशाचाश्चात्र तिष्ठन्ति स्वकर्म्मवशपीड़िताः । यत्र संबर्द्धते नित्यं क्षुत्पिपासामहोद्धता । भक्तचौरान् जनांस्तत्र प्रवेश्य यमकिङ्कराः । प्रयान्ति सदनं याम्यं चित्रगुप्तोऽस्ति यत्र वै । स तत्र भक्तचौरश्च पिशाचकुलवेष्टितः । भक्तसंख्याप्रमाणेन वसति तत्र कर्म्मतः । कर्म्मान्ते वायसीं योनिं प्राप्य दुःखञ्च विन्दति । काकोऽष्टादश वर्षाणि तस्मात् कङ्कः प्रजायते । सोऽपि द्वादशकं जीवेत्ततोभवति मानुषः । कामलारोगवान् भूत्वा तद्दोषजनितेन च" ।

२७कासः"कासः पञ्चविधोराजन् ! जायते येन कर्म्मणा । तदहं विस्तराद्वक्ष्ये भूप ! कर्मवशाद्यतः । येन दग्धोजनो नित्यं मिथ्यावाक्यैः सुदारुणैः । पित्तप्रबलकं कासं प्राप्य कासेन सीदति । ब्राह्मणस्थानविध्वंसी वातकासार्द्दितोभवेत् । गृह्यते श्लेष्मकासेन जलाशयस्य विघ्नतः । अन्नविश्वासितं यस्तु भिन्नभावं प्रपश्यति । सन्निपातोत्थकासेन गृह्यते त्वमतः शृणु । अयज्ञेन पशुं हत्वा भुङ्क्ते मांसन्तु योनरः । सर्वदोषोत्थकासेन गृह्यते शृणु भूपते ! । इति कासपरिज्ञानं कथितञ्च मया शृणु । पुनस्ते कथयिष्यामि यत्ते मनसि वर्त्तते । राजोवाच । श्रुतं कासपरिज्ञानं कर्मणा येन जायते । नरकं श्रोतुमिच्छामि त्वत्तोब्रह्मविदां वर ! । भृगुरुवाच । स तु कर्म समासाद्य पच्यते यत्र तच्छृणु । चिन्तयन् स्वानि कर्माणि रोदमानोनिरन्तरम् । करम्भवालुकानामनरकं योजनायुतम् । कूपाकारं भयं दीप्तं वालुकाङ्गारकण्टकैः । दह्यते भिद्यते तत्र वर्षलक्षत्रयावधि । नरकाज्जायते दुर्गे जले कुम्भीरसंज्ञकः । कुम्भीराच्छूकरोभूत्वा जीवेद्वर्षचतुष्टयम् । तस्माद्गृहबत्वमासाद्य महाभारवहोभवेत् । तदन्ते मानुषीं योनिं संप्राप्य परिदह्यते । असाध्यकासरोगेण तप्यमानोऽवसीदति" ।

२८श्वासकासः । "श्वासकासो महाव्याधी भवेद्देहाभिघातकः । उद्भवेत् कर्मणा येन तन्मे निगदतः शृणु । महोद्ध्विच्छिन्नतमकक्षुद्रभेदाश्च पञ्चधा । श्वासः संजायते नृणां पृथक्कर्मवशानुगः । यस्तु यज्ञमनासाद्य पशुश्वासं निरुध्य च । हन्ति, खादति वा मोहात् महाश्वासेन गृह्यते । पौराणिककथामध्ये यस्तु वाचाऽन्यथा वदेत् । ऊर्द्ध्वश्वासं समासाद्य हन्तोत्थहरकृर्म्मयम् । निषिद्धदाव-

पङ्गुत्वाच्छिन्नपादेन दृश्यते । मर्त्यः शास्त्रार्थनिर्णिक्तं वाक्यं यो दूषयत्यपि । पीड्यते तमकश्वासैः ४ क्षुद्रैः ५ पाकस्य विप्लुतः । परत्र कर्म्मणा देही नरकेषु विपच्यते । नरकान्ते व्यालयोनिं व्याघ्रीं शौकरवायसीम् । पृथक्कर्मवशाद्योनिं गत्वा स परितप्यते । मानुषत्वमनुप्राप्य पूर्व्वोक्तेनोपसृज्यते" ।

३९ यक्ष्मरोगः । "यक्ष्मरोगस्य विज्ञानं दुष्टत्वं सर्व्वरोगतः । महायाञ्चस्य वै राजन् ! कथयामि तवाग्रतः । सेनापतिः क्षयगदस्य च पाण्डुरोगोदाहज्वरोऽप्यसरएव बलासमाख्यम् । हृल्लासकः कामलकः सहायौ यौ श्वासकासावपि मन्त्रिणौ च । स श्रुत्वैवंविधं घोरं यक्ष्मरोगं सुदारुणम् । प्रणम्याह मुनिश्रेष्ठं त्रिकालसर्व्वदर्शिनम् । राजोवाच । अस्य रोगस्य चोत्पत्तिर्जायते केन कर्म्मणा । केन दानेन विप्रेन्द्र ! परत्रापि न वर्द्धते । तत्सर्व्वं विस्तराद्ब्रूहि श्रोतुमिच्छामि यत्नतः । भृगुरुवाच । पुरा येन हतो विप्रो न्यासापहरणं कृतम् । वृत्तिच्छेदः कृतो येन मधुविघ्नकरश्च यः । सर्व्वस्वेन प्रजापीडा कृता येन स्वकर्म्मणा । स मृतो दृश्यते याम्यैर्दूतैरेव भयङ्करैः । निबध्यान्धतमे मार्गे दक्षिणद्वारिभीषणे । ततो नीत्वा यमस्याग्रे कम्पमानञ्च पापिनम् । संयमन्यां यमस्याग्रे नीत्वा तं पापकारिणम् । हृष्टपुष्टाश्च ते दूताश्चित्रगुप्तान्तिकं ययुः । चित्रगुप्तश्च तं दृष्ट्वा क्रोधारुणितलोचनः । चित्रगुप्त उवाच । इमं पापं दुराचारं नरकं नय दुर्व्वहम् । योजनानां शतं लक्षं कुम्भीपाकं सुदारुणम् । ताम्रकुम्भमये दीप्ते वालुकाङ्गारसंवृते । एवंविधे तु दुष्टात्मा क्षिप्तस्तत्र स्वकर्म्मतः । दह्यमानोऽतिदुःखेन यावदाभूतसंप्लवम् । कालान्ते स पुनः पापी कृमियोनौ च जायताम् । तत्र जीवति वर्षाणि दशपञ्च च भूपते ! दुष्कृतस्य क्षयं कृत्वा ततो भवति मानुषः । अत्युग्रक्षयरोगेण पीड्यमानस्तु दृश्यते" ।

४० रक्तपित्तम् । "शृणु राजन् ! पुरा वृत्तं यस्येदं कदनं महत् । कराटकारणसंस्थाने सुव्रतो नाम वै द्विजः । तस्य पुत्रो दुराचारः सर्व्वधर्म्मबहिष्कृतः । परद्रव्याभिलाषी च परभार्य्यारतिप्रियः । एकदा कामतस्तेन पितृव्यस्य वधूर्बलात् । धर्षिता तेन दोषेण यमस्य विषयङ्गतः । नरकान्ते कुले जातस्तस्य कर्म्मसमुद्भवम् । रक्तपित्तगदं भुङ्क्ते स्वकर्म्मोर्ज्जितदोषतः" ।

४१ गुल्मरोगः "अतःपरं प्रवक्ष्येऽहं गुल्मरोगं सुदारुणम् । यस्मादुत्पद्यते पुंसो मृतो वा याति यत्र वै । कर्म्मतो याति तां योनिं येनोपशमनं भवेत् । काकोलनाम नरकं कृमिपूयपरिप्लुतम् । क्षिप्यते तत्र दुष्टात्मा एकाकी मिष्टभोजनः । अन्त्यजागमनेनापि नरकं नाम दुर्गमम् । तस्मात् पिपीलिका भूत्वा जीवेद्वर्षचतुष्टयम् । दुष्कृतस्य क्षयं कृत्वा जायते तत्र मानवः । गुल्मरोगं समासाद्य वेदनैः परितप्यते । अगदैर्न शमं याति तदा ज्ञेयं तु कर्म्मजम्" ।

४२ शूलरोगः "शृणुष्व कथयिष्येऽहं तव स्नेहान्महीपते ! । मूढा निरपराधेन ये लोककदनप्रदाः । घ्नन्ति शूलेन चास्त्रेण वाक्यदोषोद्गमेन च । तानेव निष्ठुरा दूता यमस्याज्ञाकराश्च ये । महाप्रेताख्यनिरये दीप्तशूलसमावृते । भेदयन्तीव तत्रैव दम्पत्योर्भेदकानपि । भुक्त्वा तु कदनं घोरं मन्वन्तरचतुष्टयम् । नरकान्ते ततो मर्त्ये जायते पक्षियोनिषु । पक्षी भूत्वा वियोगी स्यात् जीवेद्वर्षचतुष्टयम् । मानुषत्वमवाप्यैव शूलरोगातुरो भवेत्" ।

४३ अर्शोरोगः । "शृणुष्व तव पुत्रेण पुरा जन्मान्तरे कृतम् । साध्वीमृतुमतीं स्नातां सन्निधिं नागतश्च सः । एतत्कर्म्म कृतं तेन गृहीतश्चार्शसा च सः । आत्महा भ्रूणहा यस्तु कृतो येन च गोबधः । ते चार्शसा च दृश्यन्ते भुक्त्वा कष्टं सुदुःसहम् । पञ्चविंशत् समाः कोट्यो लक्षाणामूनविंशतिः । तामिस्राख्यं महाघोरं गाढान्धतमसावृतम् । सर्पादिना समाकीर्णं दुष्प्रेक्ष्यं जीववर्जितम् । स तिष्ठेद्विवशो दीनो येनेदं दुष्कृतं कृतम् । कर्म्मक्षयमनुप्राप्य पश्चाद्भवति मानुषः । शेषेऽर्शोगदवान् भूत्वा दुःखेन पीडितो भवेत्" ।

४४ भगन्दररोगः । "गुदस्य द्व्यङ्गुले पार्श्वे पित्तरक्तोदकाकृतिः । एभवेद्विकटाकारो दुर्व्वहो मर्म्मभेदकः । स वै भगन्दरो ज्ञेयः कर्म्मजो नोपशाम्यति । आचार्य्यभार्य्यागमनं ये कुर्व्वन्ति नराधमाः । पक्षपातमधर्म्मेण बालवृद्धधनापहाः । ते पतन्ति महाघोरे नरके च सुदारुणे । यः कोषमूलकृन्मर्त्त्योऽशाहनं भद्रपीठकम् । चोरयेद्यस्तु दुर्बुद्धिर्गृह्णीयात् स्त्रीधनं च यः । स मृतस्तु विपलाख्यं नरकं प्राप्य सीदति । गृध्रश्वव्याघ्रगोमायुभक्ष्यमाणोऽतिदुःखितः । भुक्त्वाद्भुतसहस्रञ्च नवसंख्यं क्षमेत् पुनः । सोऽप्यनेनैव रोगेण जन्मादावपि दृश्यते" ।

४५ छर्द्दिः "शृणुष्व नृपशार्द्दूल ! कथयामि तवाग्रतः । गवां

गृहीतं यत्किञ्चित् सुखादाक्रम्य योऽहरेत् । सोऽन्यजन्म समासाद्य वातांशच्छर्द्दिमान् भवेत् । अतर्पयित्वा पितरं जलपानं करोति यः । मृतः पैशाचकीं योनिं संप्राप्य क्षुत्पिपासया । पीड्यते तप्यते तावद् यावद्व्योम-गतो रविः । मानुषत्वमनुप्राप्य पित्तांशच्छर्द्दिपीड़ितः । वातपित्तपरिज्ञानं सद्वैद्यस्योपदेशतः । ज्ञात्वा कर्मो-द्भवं दानं देयं मुक्तिमभीप्सता” ।

४६हिक्का “हिक्का न शाम्यते यस्य सद्वैद्यस्योपदेशतः । तां विद्यात् कर्मजां हिक्कां शृणु भूप ! वदामि ते । उत्सादितं येन तपः प्रवृत्तं यतेश्च गोविप्रसुखासनस्थम् । स याति घोरं नरकं मनुष्यो हिक्काविपन्नः पुनरेति सत्यम्” ।

४७अरोचकम् “पित्रे मात्रे चातिथये नादौ यस्तु च भोज-नम् । दत्त्वाश्नाति स पापिष्ठो यां गतिं याति तां शृणु । तस्यास्यं कोष्ठदेशे तु कृमिर्भूत्वा विपच्यते । मृते विष्ठा-कृमिर्भूत्वा पच्यते बहुवासरान् । ततो वायसयोनित्वं प्राप्य जीवेच्चिरं दिनम् । तत्र वायसयोनौ तु सर्वदुः-खमवाप्य वै । मनुष्यत्वमवाप्नोति हीनयोनौ प्रजायते । अरोचकगदेनापि पीड़ितस्तत्र केवलम्” ।

४८स्वरभङ्गः “त्वया कृतं पुरा यच्च तन्मे निगदतः शृणु । सुस्वरं गायमानन्तु श्रुतिमन्तं द्विजोत्तमम् । त्वं निषेधितवान् पूर्वं तस्मात्ते गतिरीदृशी । असमाप्तपदं यस्तु गायमानन्तु सुस्वरम् । निवारयति सोऽप्येवं स्वरभङ्गेण गृह्यते” ।

४९अतितृष्णा । “तृषितं गोकुलं प्राप्तं जलपानावलम्बनम् । विघ्नमाचरितं तेन प्रपाध्वंसकृते न च । जलपात्रं तथा हृत्वा मृतो याति यमाज्ञया । ऊषरे निर्जले देशे दुर्वहे सिकतामये । कीटयोनिं समासाद्य तत्र तिष्ठति पापधीः । गोलोमसम्मितं कालं दुःखमाप्नोति निर्भ-रम् । मानुषत्वमनुप्राप्य तृष्णाव्याधियुतो भवेत्” ।

५०विस्फोटकम् । “सुधन्वा नामतस्तेन चण्डालस्य जलाशये । कृतं स्नानं जलं पीतं तत्कर्मवशतः शृणु । आयुःशेषे मृतो दूतैर्गृहीतश्च यमाज्ञया । बहूष्णधूमसंयुक्ते क्षिप्तः कूपे निराश्रये । भुक्त्वा तत्र महद्दुःखं तस्यान्ते त्वत्कुले नृप ! । जातो दाहयुतो भूत्वा विस्फोटकगदा-र्द्दितः । स्वकर्मार्जितदोषं यो भुङ्क्ते का तस्य वेदना” ।

५१भ्रममूर्च्छा “भ्रममूर्च्छारुजाविष्टो येन संजायते नरः । तच्छृणुष्व यथाख्यातं कथयामि समासतः । भ्रमस्तु जायते तस्य तत्र दुःखकरः परः । सभायां कुटिलालोकं भ्रामयित्वाऽन्यथा वदेत् । मूर्च्छान्वितो भवेत् सोऽपि यत्र याति शृणुष्व तत् । तस्यायुषोऽन्ते दुर्द्धर्षाः किङ्करा यमदेशिताः । नीत्वा प्रयान्ति तत्रैव तामेव पिङ्गलां पुरीम् । स्वकर्मवशतस्तत्र पिशाचाः सन्ति दुःखिताः । संक्षिप्तस्तत्र दुष्टात्मा पिशाचा यत्र मूर्च्छिताः । भ्रम-युक्तो भवेत्तत्र पूर्णमन्वन्तरं नृप ! । उलूको जायते तस्माद्दिवा वसति कोटरे । उलूकत्वत्रयं प्राप्य वकयोनौ प्रजायते ? वको जीवति वर्षैकं ततो भवति मानुषः । पूर्वकर्मप्रभावेन भ्रममूर्च्छान्वितो भवेत्” ।

५२हृद्रोगः । “हृद्रोगो जायते येन कर्मणा त्वमतः शृणु । सावधानो महीपाल ! कथयामि तवाग्रतः । लोभात् द्वेषाद्भवेद्यस्तु परपीडाप्रदायकः । मर्मोद्घाटनकृद्यो-ऽपि कदनं तेन विन्दति । मनुष्यस्तेन दोषेण दुर्वहम् नरकं व्रजेत् । नरकान्ते पुनर्मर्त्यो हृद्रोगैरतिदारुणैः । पीड्यमानो दुनोत्याशु कर्म्मदोषविशेषतः” ।

५३आमवातः । “पुरा येन महीपाल ! कृतो यज्ञस्त्वदक्षिणः । उत्सृज्य ब्राह्मणायैव न दत्तं येन वा पुनः । अधर्मा-र्जितवित्तानां संग्रहो येन वा कृतः । ग्रन्थिग्रन्थिषु तस्यैव भवेदामस्य संग्रहः । तस्मात् प्रवर्त्तते शोथो वेदना चातिदारुणा । आमवातस्तु स ज्ञेयः कर्मज-स्तस्य निष्कृतिम्” ।

५४सर्व्वाङ्गवातव्याधिः “वातव्याध्युद्गमोयेन कर्म्मणा देहिनां नृप ! । उत्पन्नो बहुधाभावैः सम्यग् वक्ष्ये ततः शृणु । सुरापयोषिद्गमणं येन वै वाञ्छता हठात् । कृतं स नरकस्यान्ते शुनीयोनौ प्रविश्य च । जङ्घा-स्थूलकटीस्थूलयुक्तः केवलखञ्जकः । परस्त्रीवसनं येन हृतं तस्य ततः शृणु । मृतः स पुरुषै-र्याम्यैर्नीतश्चेतोयमाज्ञया । आयसीञ्च शिलां तप्तां बन्धद्वारपरिप्लुताम् । तद्गले बन्धयेद् यत्नाद्यावदिन्द्रा स्तुर्दश । तस्यान्ते शाकुनीं योनिं प्रयात्यब्दचतुष्टयम् । मानुषत्वमनुप्राप्य गृह्यते तेन संशृणु । सर्व्वथा प्रत्ययस्तस्य सर्व्वाङ्गं वातपीडितम् । सोष्णगात्रं सदा तस्य भवतीह स्वकर्मतः” ।

५५तुन्दरोगः “घटो हृतः पुरा येन ब्राह्मणस्य महीपते ! । दृश्यते स च दुर्वृत्तः संयमन्यां यमाज्ञया । कुम्भीरो-जायते तस्माच्चिरकालं जले वसेत् । तस्यान्ते मानुषीं योनिं संप्राप्य तुन्दवान् भवेत् । अशक्तः सर्व्वकार्य्येषु गदोपचयदोषतः । संकल्प्य विप्रे क्रतुदक्षिणादिकं यदा न दद्यात् तदुपाहितं फलम् । समप्रमेदोप-

चयस्य संग्रहं भवत्यतीवोपवरैव तौन्दिकः"।

५६अम्लपित्तम् "अथाम्लपित्तोपचयो भवेद्येन वदामि तत्। जिह्वास्वादसमाविष्टो नानयोयो निर्विशति। निषि- द्धमविकल्पेन स खतः प्राप्य वायसीम्। ततश्च सारमेयीञ्च योनिमासाद्य कर्मतः। पश्चात् स जायते देही विदग्धान्नं मक्षुप्य च। उक्तकण्ठस्थाम्लपित्तेन दह्यमानोऽतिदूषितः"।

५७शोथोदरम् "लोभान्मोहाद्भयाद्द्वेषात् कृत्वाऽधर्मं वदेत् यः। स भुङ्क्ते नरकं घोरं पश्चाच्छोथोदरी भवेत्"।

५८जलोदरम् "ब्रह्मविष्णुमहेशेषु भिन्नभावं करोति यः। स्पृह्यते स तु दुरात्मा जलोदररुजा ततः"।

५९शोथः "पुत्रस्ते शोथवान् जातः स्वकर्मार्जितदोषतः। कर्त्ता भुङ्क्तेऽन्यथा नात्र कर्त्तव्या परिदेवना। विनापरा- धेन यतोबहवस्ताडिताः पुरा। कषायवेत्रवंशैश्च तेन शोथार्हितश्च सः। उत्पातकसमाविष्टो जातस्तत्र गृहे शृणु। तेन शोथार्हितः पुत्रो वृथा चिन्तापरः प्रभो!"

६०मूत्रकृच्छ्रम् "मूत्रकृच्छ्रं भवेत् भूप! कर्मणा येन दारुणम्। देहिनो देहनाशार्थं तन्मे निगदतः शृणु। विधवा- गमनं येन कृतं वा मद्यभोजनम्। मूत्रकृच्छ्री भवेत् सोऽपि भुङ्क्ते च नरकं शृणु। अकृत्वा विगुणं कर्म जन्मकर्म च वर्त्तते"।

६१मूत्राघातः "मूत्राघातो भवेद्येन तन्मे निगदतः शृणु। दम्पत्योर्मैथुने यस्तु महाविघ्नं समाचरेत्। मूत्राघातो भवेत्तस्य दुर्वहं कदनप्रदम्"।

६२अश्मरी "अथाश्मरी भवेद्येन तन्मे निगदतः शृणु। ऋतुस्नातां स्त्रियं यस्तु सन्निधौ नोपगच्छति। अप्रीत्या क्रोधभावाद्वा स याति नरकं नरः। पूयशोणित- संमिश्रे नरके पच्यते भृशम्। मानुषत्वमनुप्राप्य शार्कराश्मरिरोगवान्। भूप! विन्दत्यनुदिनं कदनं मूत्र- रोधतः। आर्त्तवस्य विपर्य्यासं यः करोति नराधमः। तस्मात् सर्वप्रयत्नेन नरोनार्य्यामृतावियात्"।

६३मेहः। "मेहाश्च विंशतिः ख्याताः पृथक्कर्मप्रभावजाः। तेषां नामान्यहं वक्ष्ये क्रमादुत्पद्यते यतः। मधुमेहः सान्द्रमेहः सुराशुक्रोदकस्तथा। इक्षुः सिकतशीधुश्च शित- मेहस्तथैव च। फेनःक्षीरश्च नीलश्च हारिद्रः कालसं- ज्ञकः। वसा रक्तश्च माञ्जिष्ठोमज्जा क्षारस्तथा गजः। सद्- वैद्योपदेशेन ज्ञात्वा मेहान् पृथक् पृथक्। नामानु- सारतः पूर्वं कर्म ज्ञात्वा विधिञ्चरेत्। पूर्वं मैथुनकद्वयस्तु

शौकरीं योनिमाव्रजेत्। तस्यान्ते मानुषीं प्राप्य जलमेहा- र्हितो भवेत्। मातृगामी बलान्मोहान्मधुमेही भवेन्नरः। रजकीगमनाच्चैव क्षारमेही प्रजायते। सतीविपर्य्ययं कृत्वा सान्द्रमेहान्वितो भवेत्। रोगिणीगमनान्मर्त्यो भवेन्माञ्जिष्ठमेहवान्। मित्रस्त्री धर्षिता येन स भवेदिक्षु- मेहवान्। चतुष्पदाभिगमने भवेत्सिकतमेहवान्। स्वर्णहर्त्ता क्षीरमेही शितमेही सुरारतः। कालमेही भवेत् सोऽपि पुष्पवत्याश्च धर्षणात्। रजस्वलायां रति कृद्रक्तमेहार्हितो भवेत्। मज्जमेहयुतः सोऽपि योऽन्त्यजागमनञ्चरेत्। हस्तिमेहोऽतिदुष्टस्तोविधवा गतिदोषतः। ब्राह्मणीगमनाद्देही हस्तिमेहेन मेहति। अव्रतागमनासक्तो हरिद्राभञ्च मेहति। मातरं येऽभिगच्छन्ति भगिनीञ्चात्मनः सुताम्। स्वश्रूञ्चैवाजताऽ- रक्तां भ्रातृभार्य्याञ्च मातुलीम्। गुरुस्त्रीं राजपत्नीञ्च मित्रस्त्रीं वा कुटुम्बिनीम्। मृता वैवस्वतपुरीं यान्ति भूतैः प्रपीडिताः। तांस्तत्र दूतास्ताः शृणु वदामि ते। अङ्गारराशौ प्रक्षिप्य तान् दहन्ति यमाज्ञया। दूतास्तु महतीं घोरां ज्वलन्तीमायसीं शिलाम्। खाद- यन्ति च तान् पश्चात् नरके च क्षिपन्ति वै। नरकान्ते पुनस्तेऽपि मृताः स्युः शूकरा भृशम्। शूकराः पञ्च- वर्षाणि दश वर्षाणि कुक्कुराः। पिपीलिकास्त्रयोमासा वृश्चिकाश्चावद्मात्रकम्। भूत्वा प्रयान्ति गोयोनौ सरुजा विफलेन्द्रियाः। तत्राधर्मक्षयं कृत्वा ततो मानुष- योनिषु। प्रमेहगदयन्त्रः स्युः प्राप्नुवन्ति मनोव्यथाम्"।

६४पुंस्त्वविनाशः "धर्मपत्नीं परित्यज्य योऽन्यस्त्रीमैथुने रतः। स स्त्रीविरक्तो भवति पुंस्त्वं तस्य विनश्यति"।

६५कुष्ठवृद्धिः "सख्यं कृत्वा लुब्धकेन विप्रोवेदबहिष्कृतः। सदैव गहनं याति मृगं हन्ति निषादवत्। पक्षिपोतान् बहून् सोऽपि नित्यं खादितवांस्तदा। आयुःशेषे स वै दूतैर्यास्यैर्नीतोयमाज्ञया। निःक्षिप्तो नरके घोरे तस्यान्ते त्वत्कुले द्विज!। जातः सर्वगुणोत्पन्नः स्वकर्म- वशतः शृणु। कुष्ठरोगेण सन्तप्तः क्षीणरेताः सुदुःखितः"

६६उन्मादः "ब्राह्मणं वैष्णवं तीर्थं पितरं मातरं द्विजम्। नार्चयेन्निन्दयेद्वापि पुरा स नरकं व्रजेत्। पुरीषाख्ये महाघोरे निरये श्लेष्मभोजने। अधःशिरा भवेत् पापी नानादुःखप्रपीड़ितः। कल्पान्ते स पुनर्योनिं मानुषीं प्राप्य कर्मभिः। उन्मादरोगवान् मर्त्यो जायते नृपनन्दन!। स्मृतिभ्रमकरं द्रव्यं यैर्दत्तं ब्राह्मणे गुरौ। दम्भाचार

चरेद्यस्तु भवेदुन्मादरोगवान्”उन्मादभेदाः सुश्रुतोक्ता ज्ञेयाः।

६७अपस्मारः “ये कोपवशगाः पूर्वं न जानन्त्युपकारिणम्। ब्राह्मणप्राणरोधश्च यैः कृतो मानशाधमैः। गोस्तनं रश्मिभिर्बद्धं ते स्युर्निरयगामिनः। नरकान्ते व्याघ्रयोनिं वैयाघ्रीमपि शौकरीम्। ततो मानुषयोनौ च ह्यपस्मार युतो भवेत्”।

६८अस्थिस्रुतादिः “अजाश्च तिलधेनुश्च लौहचर्मतिलाजिनम्। गजोभयमुखीधेनुशालूकस्यापि संपदम्। लौहं तैलञ्च लवणं महादानस्य वा पदम्। यः करोत्यन्यथा योनौ मैथुनं काममोहितः। नरेषु गवि यो रेतःसेकं वा कुरुते क्वचित्। ब्रह्मस्वं न्यपतिद्रव्यं योऽहरेद्दुष्टभावतः। अन्त्यजेभ्यरणं प्राप्तं तथा भार्य्यां विवाहिताम्। दन्तिदस्युर्नाखिव्याघ्रसिंहगवादिभिर्हतः। स मृतः स्वास्थ्यरहिते स्थाने च स विषीदति। अशेषकालं तस्यान्ते मानुषत्वमवाप्य सः। अस्थिपद्मादिभी रोगैर्गृहीतस्तप्यते सदा”।

६९मूत्रकृच्छ्रः “अग्नये प्रक्षिपेदाज्यं मन्त्रहीनं विमोहितः। स मृतः पर्वताङ्गूतैः पात्यतेऽधः पुनः पुनः। सर्वाङ्गव्याधिदिग्धः स क्रन्दमानो यमाज्ञया। भुक्त्वा कष्टं चिरादुग्रं मानुषत्वमवाप्य सः। मूत्रकृच्छ्रान्वितं गात्रं प्राप्य मुह्यति निर्भरम्”।

७०विद्रधिः “फलापहरणं येन कृतं चौर्य्येण वै पुरा। समृतो यमदूतैश्च शास्यमानो यमाज्ञया। संयमन्यां पीडितोऽपि दक्षिणद्वारि केवलम्। शोचयित्वा स्वयं कर्म क्रन्दमानः पदेपदे। प्रक्षिप्तो नरके घोरे स वै सीदति पापकृत्। ततो वानरयोनौ च जन्मासाद्य स दुष्टधीः। तत्क्षये मानुषत्वेऽपि स वै विद्रधिमान् भवेत्”।

७१अपची वातग्रन्थिश्च “त्वङ्मध्ये भवन्ति यस्य पर्कटीफलसन्निभाः। भवन्ति ग्रन्थयस्तस्य नाम स्यादपचीगदम्। बहिर्वृहत्फलाकारं वर्द्धते च दिनं प्रति। वातग्रन्थीति सा प्रोक्ता जायते देहिदेहतः। इदं गदद्वयं भूप! जायते येन तच्छृणु। कथयामि तव स्नेहाद्धर्मशीलोऽसि महीपते! द्रुमस्य बकुलस्याथ पर्व्वतस्य नदीतटम्। वल्मीकाग्रं गवां गोष्ठं गोशालां देवतालयम्। समासाद्य चरेन् मूत्रं तथा निष्ठीवनादिकम्। सकामं कुरुते यस्तु स प्राप्नोति ततः शृणु। याम्यपाशञ्च दुर्भेद्यं पापिनां भयप्रदम्। कृमिपूयवसाविष्ठाशोणितेनापि पिच्छिलम्। पापिनस्तत्र गच्छन्ति दूतैर्बद्धाः सुनिष्ठुरैः। शोचन्तः स्वानि कर्माणि क्रन्दमानाः पदेपदे। यमाज्ञया च निरये घोरे पूयपरिप्लुते। क्षिप्तास्तिष्ठन्ति तत्रैव यैरेवं दुष्कृतं कृतम्। तस्यान्ते मानुषीं योनिं प्राप्य तद्व्याधिमान् भवेत्”।

७२शिरोरोगः “संप्राप्य तीर्थं ये मर्त्या नाचरन्तीह शोत्तमम्। ब्राह्मणञ्च गुरुं दृष्ट्वा न नमन्ति कुबुद्धयः। तत्कर्मपाशबद्धास्ते गृहीत्वा यमकिङ्करैः। पुरीं कल्माषवतीं नीत्वा पिशाचकुलसेविताम्। ताड्यन्ते विविधैर्यन्त्रैर्घोरैः पापिभयावहैः। अनेककालं तत्रापि स्थित्वा भल्लूकयोनिषु। जायन्ते तत्र तिष्ठन्ति वर्षाणि दशसंख्यया। मेषयोनिं ततोयान्ति त्रिरब्दं तत्र संस्थिताः। भुक्त्वा कर्मवशात् कष्टं मानुष्यं यान्ति ते पुनः। मानुषीं योनिमासाद्य शिरोरोगयुतास्तु ते।

७३नेत्रहीनता “पुरा सकामतो येन कौटिल्येन पराक्रमात्। दृष्टा नेत्राभिघातो वा गोः कृतो ब्राह्मणस्य वा। स एव कर्मवशगः कुपितैर्यमकिङ्करैः। काकोले नरके क्षिप्तो बद्धस्तिष्ठति शृङ्खलैः। वज्रतुल्यनखैः काकैस्तस्य नेत्रस्य कृन्तनम्। क्रियतेऽब्दशतं यावत् उत्पत्योत्पत्य नित्यशः। शोचते स्वानि कर्माणि क्रन्दमानोऽतिदुःखितः। उत्पत्य नरकात् पश्चात् उलूकोजायते हि सः। सदा कोटरशायी च दिवान्धः काकशङ्कितः। तिष्ठत्यब्दाष्टकं यावन्मानुषत्वमवाप्य सः। नेत्रहीनोभवेद्दुःखी भवेत् कर्मवशीकृतः। यस्मिन् वयसि यत् कर्म सुकृतं वापि दुष्कृतम्। तस्मिन् सहायोभवति तद्वयस्येव जन्मतः। जीवनं तद्वृथा मर्त्ये नेत्रहीनस्य देहिनः। विद्यमाने शरीरेऽपि नेत्रहीनो निरर्थकः। प्राणागारमिदं देहं लोष्ट्रवत् प्राणवर्जितम्। तद्वन्नेत्रविहीनो हि वृथा स्यान्मरणं वरम्”।

७४रात्र्यन्धता “पुरा परस्त्री खलु कामबुद्ध्या विलोकिता वस्त्रविवर्जितापि। गोविप्रहिंसासु नितान्तदृष्टिर्विलोकिता नेत्रविहीनतायै। नक्तान्ध्यमन्दत्वमथान्यरोगः दिवान्धता चार्बुदशपजा मे। देवादुपेता कुरु दूरमाशु तां मेऽद्य देवेश! हरे! प्रसीद”।

७५नेत्ररोगः “मन्ददृष्टिर्भवेद् येन मनुष्यस्तमतः शृणु। उदयास्तमवेलायां भानुं मध्यन्दिने नरः। ईक्षते कामतो योऽपि मन्ददृष्टिः स वै भवेत्। यश्चाशुचिशरीरः सन् वीक्षते दिवसेश्वरम्। नक्तं पश्चादस्य हितं वह्निञ्च गां दिवम्। सोऽन्यजन्म समासाद्य नेत्रव्याधियुतो भवेत्। अनेन पटलच्छन्नतिमिरार्त्तियुतोभवेत्। दम्पतिभ्यां प्रहृष्टं यो नरः पश्यति मैथुनम्। सोऽन्यजन्म समासाद्य नेत्रपुष्पगदार्त्तिमान्। दम्पत्योः सुरतासक्तचित्तयोः सुर-

लेपनम् । यः करोति स वै नेत्रपूयरोगयुतो भवेत् । मृत्वा कष्टमवाप्नोति पिशाचादिक्षतोद्भवैः । विहायात्मपतिं या स्त्री पुत्रमाप्नोति जारतः । साऽन्यजन्मनि भूपाल ! विहृतासी भवेद्ध्रुवम् । वसाऽष्टया प्रपद्येद्वयः पुरुषो-वाच योषितम् । क्रोधाविष्टेन मनसा या वा श्वेन पतिं द्विजम् । साऽन्यजन्म समासाद्य विषमाक्षी भवेद्ध्रुवम्" ।

७६ गलगण्डः गण्डमाला च "पुरा येन कृतं मोहाद्गुरुस्त्री-कण्ठदर्शनम् । स मृतः प्रान्तरे देशे निर्जले च यमाज्ञया । पात्यते किङ्करैर्घोरैर्दिव्यवर्षायुतत्रयम् । पुनर्जन्म समासाद्य स्वकर्मवशतश्च सः । गलगण्डयुतो नित्यं गण्डमालाकुलो-ऽपि सन् । पापो सीदति दुःखेन चिरं कर्म्मक्षयावधि" ।

७७ नासारोगः "ब्राह्मणकर्म्मपरिभ्रष्टो मन्मथाविष्टचेतनः । सुगन्धि-कुसुमादीनि यानि द्रव्याणि तानि च । त्वया सतत-माघ्रातं प्राप्तं दत्तं न कस्यचित् । ब्राह्मणेभ्यो न देवेभ्यो दत्तं तेनेदमीदृशम् । नासिकादेशमासाद्य कर्म्म चाश्रित्य तिष्ठति । किञ्च वेश्याङ्गनासङ्गे यौवनं विफलीकृतम् । वेश्याश्च रमिता यैश्च तेनास्पृश्या द्विजातयः" ।

७८ क्षीरहीनस्तनता "याचमानं पयो या स्त्री न ददाति परा-र्भके । सा मृता सर्पिणी भूत्वा जीवेद्वर्षचतुष्टयम् । तस्मात् कच्छपिकायोनौ प्रविश्यावदचतुष्टयम् । प्रत्यक्षं नरकं भुक्त्वा मानुषी तु भवेच्च सा । शृणु भूप ! प्रसूता स्त्री क्षीणक्षी-रस्तनी भवेत् । क्षीरं न क्षरते यस्याः स्तनात् सन्तप्यते हि सा । आत्मजपालनेऽशक्ता भूत्वा कष्टञ्च विन्दति" ।

७९ स्तनविस्फोटरोगः "स्तनपाकोभवेद्येन कर्म्मणा त्वमतः शृणु । दृष्ट्वाऽन्यपुरुषं या स्त्री स्तनं दर्शयते स्वकम् । सकामा-कामवश्या वा दुष्टयौवनगर्विता । दूतैर्यमाज्ञया सापि शास्यते च निरन्तरम् । भुक्त्वा स्वकर्म्मजं दुःखं पुनर्भूत्वा च मानुषी । स्तनविस्फोटरोगाढ्या विक्षिता सुखवर्जिता"

८० वेश्यात्वम् "सति भर्त्तरि या नारी परस्मान्यभिलाषिणी । सा मृता किङ्करैर्याम्यैर्दण्डपाशाभिताड़िता । नीत्वा यमा-ज्ञया सा च विशुद्ध्यर्थं ततः शृणु । आयसं पुरुषं तप्तं स्फुरद्बहुकरोज्ज्वलम् । आलिङ्गनमतिक्रूराः कारयन्ति नरं भयम् । वर्षायुतसहस्रान्ते ततो मर्त्ये च शौकरीम् । सारमेयीञ्च मार्जारीं योनिमाविश्य कर्म्मतः । मृत्वा च मानुषी पश्चाद्दारस्त्रीत्वमवाप्य सा । अनेकपुरुषैः सा च रम्यमाणा यथेच्छया । मर्त्ये मोहवशात् सा च सुखं प्राप्य सुगर्विता । न भवेद्या चान्यनारोयन्नपच्छलजीविका । तस्याः सा च भवेद्वेश्या जन्मजन्मान्यथा न हि" ।

८१ बाधिर्य्यम् "पुरा यस्तु महीपाल ! धर्म्मचिन्तापराङ्मुखः । निन्दकः पितृमातॄणां द्विजातीनां गुरोस्तथा च । स्मृतो बाधिर्य्य-रोगेण स एव परिक्लिश्यते" ।

८२ श्लेष्मरोगः "नित्यक्रियाबहिर्यस्तु भूत्वा भुङ्क्ते स दुर्मतिः । मृतः भूमिपथं प्राप्य शुष्ककाष्ठोपजीवकः । वायसत्वमनु-प्राप्य गृध्रकुक्कुटसूकरः । भूत्वा च मानुषत्वे स श्लेष्म-रोगी सदा भवेत्" ।

८३ हस्तशूलम् "द्विजः सन्ध्याविहीनो यः स शूद्रादधमः स्मृतः । स मृतः शास्यते याम्यैर्वस्त्रपुरोगमैः । काकीं पारावतीं योनिं गत्वा तिष्ठति वत्सरम् । ततो मानुषतां प्राप्य हस्तशूलार्दितो भवेत्" ।

८४ योनिरोगः "रममाणं पतिं या स्त्री तोषयेन्न यथेच्छया । उष्ट्री सा च मृता वै स्यात् जीवेद्वर्षचतुर्दश । तस्माद्वै मानुषीं प्राप्य योनिं व्याध्यादियोगिनीम् गत्वा सन्तप्यमाना सा योनिरोगेण निर्भरम् । किञ्च चौर्य्यप्रकारेण या हरत्यन्यभोजनम् । सा तद्रोगेण सततं गृह्यते नात्र संशयः" ।

८५ असृग्दरम् प्रदरम् "अथासृग्दरमत्युग्रं प्रदरं योनिदोषजम् । कर्म्मणा येन राजेन्द्र ! तन्मे निगदतः शृणु । कृत्वा रन्ध-नमादौ या योषिद्भुङ्क्ते बुभुक्षया । बुभुक्षितं पतिं त्यक्त्वा वृथा पशुवधेन च । प्रयाति नरकं घोरं यत् प्रोक्तं मद्यभक्षणे । प्रत्यक्षं नरकं भुक्त्वा ततो भवति वायसी । वायसी दश वर्षाणि शुकी भवति सा पुनः । मानुषी तु भवेत् पश्चादसृग्दरगदार्दिता । श्वेतप्रदरयुक्ता सा भवेद्या भक्ष्यचोरिणी" ।

८६ दुष्टस्त्रीसुतोत्पादनम् परकान्तासुतोत्पादनञ्च । "महामना महादाता तीर्थकृत् पुण्यकृच्छुचिः । नगरीं भ्रमता तेन काचिदेका मनोहरा । रण्डा व्यलोकि सौन्दर्य्यशीलारस-विलासभूः । तां दृष्ट्वा मोहितो राजा सम्यक्संजातकौतुकः । तामादाय बलाच्छीघ्रं ययौ निजगृहं प्रति । विहाय महि-षीरन्या नारीः प्रियंवदाः । अत्यानुरागवान् राजा क्षणं ताञ्च न मुञ्चति । तस्या गर्भे सुतं राजा जनया-मास सुन्दरम् । दैवादपि महीपाल आयुःशेषे यमा-ज्ञया । नीतो यमान्तिकं दूतैर्घोरैश्च भयदारुणैः । धर्म्मराजपुरे तस्य चित्रगुप्तेन धीमता । एतत् श्रुत्वा यमः क्रुद्धोऽब्रवीद्दूतान् सुनिष्ठुरान् । एवं क्रूरं दुरा-चारं पर्य्योषितप्रियं सदा । रौरवं नरकं नीत्वा ताडयध्वं निरन्तरम् । तस्याः पुरीषमूत्राभ्यां तत्पश्चाच्च सुतञ्च

कर्मस्थितैः षड्पञ्चगैर्व्ययितैश्च। तृतीयषष्ठगाः पापा लग्नेन्दुभ्यां शुभा मताः। निधनान्त्यगता नेष्टा विशेषाल्लग्नसंस्थिताः। एकोनत्रिंशे वियति रविः खे, चन्द्रो धने २, चन्द्रसुतः ४, क्रमेण। त्रिवेदनन्दक्रमिते १२८ र्क ईज्योऽष्ट भृगुः १ शुभं खे कुरुते १२८ ऽत्तभीतिम्” जातके तच्चिन्ताप्रकारः।

**कर्म्माङ्ग** न० ६त०। विहितस्य यागादिकर्म्मणोऽङ्गे यथा दर्शादेः प्रयाजादि। देशकालादयोऽपि कर्म्माङ्गानि। यथाह गर्गः—“तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधान गुणभावेन स्वातन्त्र्येण न ते क्षमाः”। “प्रधानस्य विधेयस्य कर्म्मणो गुणभावेनाङ्गत्वेन, तदुक्तं “कर्म्मसन्निहितं नैव बुद्धौ विपरिवर्त्तते। शब्दात्तु तदुपस्थानमुपादेये गुणो भवेत्” भट्टका०“प्रमाणान्तरासन्निहितं कर्म्म बुद्धौ प्रथमं न विषयीभवति प्राथमिकशब्दादेव तस्य कर्म्मण उपस्थितिरिति उपादेये स्वविधेये कर्म्मणि पूजादौ चन्द्रादिक्रियात्वेन तदवच्छिन्नकालत्वेन वा शुचितत्कालजीविनः कर्म्माधिकारात् प्रमाणान्तरलभ्यत्वेनाविधेयत्वात्तिथ्यादिर्गुणः” ति० त० रघु०। “फलवत्सन्निधावफलं तदङ्गमिति” न्यायेन फलवत्प्रकरणे पठितानामफलानां सर्वेषां तदङ्गत्वमवधेयम्।

**कर्म्माजीव** पु० कर्म्मणा आजीवः जीवनम्। १शिल्पादिकर्म्मद्वारा जीवनसाधने। स च नृणां जन्मलग्नावधिदशमभावे मेषादीनां द्रेक्काणनवांशद्वादशत्रिंशांशैः शिल्पादिकर्म्मविशेष आजीवे जातके उक्तः, तच्च आजीवशब्दे ६४१,४२पृ० दर्शितम्। कर्म्म जीवति अण्। २शिल्पादिकर्मजीविकावति त्रि०।

**कर्म्मात्मन्** पु० कर्म्मणा आत्मा आत्मभावो यस्य। संसारिणि स्वादृष्टोपनिबद्धशरीरयुक्ते १जीवे। “तस्मिन् स्वपति तु स्वस्थे कर्म्मात्मानः शरीरिणः” मनुः। कर्म्मणि आत्मा मनो यस्य। २क्रियासक्तचित्ते च।

**कर्म्माध्यक्ष** पु० ७त०। क्रियासाक्षिणि कृताकृतावेक्षके।

**कर्म्मान्त** पु०कर्म्मणः कृषिकर्म्मणोऽन्तो यत्र। सम्यक्कृषिकर्म्मणि १कृष्टभूमौ हेमच०। “अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च” मनुः। कर्म्मणः तत्फलस्यान्तो यत्र। २इक्षुधान्यादिसंग्रहस्थाने च। “शुचीनाकरकर्म्मान्ते भीरूनन्तर्निवेशने” मनुः। “कच्चिन्न सर्वे कर्म्मान्ताः परोक्षास्ते विशङ्किताः” भा०सभा० १६५ श्लो०। ६त०। ३कर्म्मसमाप्तौ च। “कर्म्मान्ते दक्षिणां दद्यात्” स्मृतिः”।

**कर्म्मार** पु० कर्म्म ऋच्छति ऋ—अण्। १कर्मकारके (कामार) जातिभेदे, “नमस्तक्षभ्योरथकारेभ्यश्च वो नमोनमः, नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमोनमः” यजु० १६,२७। “तपसे कौलालं मायायै कर्म्मारम्” यजु० ३०,७, पुरुषमेधे “मायायै कर्म्मारं लौहकारम्” वेददी०। “कर्म्मारस्य निषादस्य रङ्गावतारकस्य च” मनुः। “ये धीवानोरथकाराः कर्म्मारा ये मनीषिणः” अथ० ३,५, २वंशभेदे (बेड़बाश), ३कर्म्मरङ्गवृक्षे च राजनि०। ४कर्म्मप्रारम्भरि त्रि०स्वार्थे कन्। कर्म्मारक कर्म्मरङ्गे वृक्षे (कामराङ्गा) पु०राजनि०।

**कर्म्मार्ह** पु० कर्म्मार्हति अर्ह-अण्। १पुरुषे राजनि०। तस्य कर्मकरणसमर्थत्वात्तथात्वम्। २कर्मकरणसमर्थे त्रि०।

**कर्म्माशय** पु० आशेरते पुरुषा अस्मिन् आ+शी-आधारे अच् कर्म्मणामाशयः। कर्म्मजन्ये धर्म्माधर्म्मरूपे गुणभेदे “क्लेशमूलः कर्म्माशयो दृष्टादृष्टजन्मवेदनीयः” पात०सू०। कर्म्मविपाकशब्दे च अस्य भाष्यविवरणं दर्शितं।

**कर्म्मिन्** त्रि० कर्म्मास्त्यस्य व्रीह्या०इनि। व्यापारयुक्ते स्त्रियां ङीप् “कर्म्मिभ्यश्चाधिको योगी—तस्माद्योगी भवार्जुन !” गीता। २फलाभिसन्धानेन कर्म्मकर्त्तरि च। “यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते” मुण्ड० उ०। “इष्टापूर्त्तादिकर्म्मिणां धूमादिमार्गेण चन्द्रमण्डलादिप्राप्तिः” शा० भा० “ऋत्विक्कर्षककर्म्मिणाम्” याज्ञ०।

**कर्म्मिष्ठ** त्रि० अतिशयेन कर्म्मी इष्ठन् इनेर्लुक्। क्रियादक्षे जने

**कर्म्मेन्द्रिय** न० कर्म्मणां वचनादीनां निमित्तमिन्द्रियम् अश्वघासादिवत् निमित्तार्थे ६त०। वचनादिकर्म्मकरेषु वागादिषु इन्द्रियेषु “पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः। कृषिवाणिज्यसेवाद्यास्त्वेष्वेवान्तर्भवन्ति हि”। “वाक्पाणिपादपायूपस्थैरक्षैस्तत्क्रियाजनिः। मुखादिगोलकेष्वास्ते तत्कर्म्मेन्द्रियपञ्चकम्” पञ्चदश्यां तेषां नाम कार्य्याण्युक्तानि। “वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्” सां०का०। “इन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यते” सां०कौ० व्याकृतञ्चैतदस्माभिः तट्टिप्पनौ।

“तेषामिन्द्रियशब्दार्थत्वे कारणमाह इन्द्रस्यात्मन इति। “इन्द्रोमायाभिः पुरुरूपईयते इत्यादि” श्रुतौ इन्द्रशब्दस्यात्मार्थकत्वदर्शनात्, पाणिनिना “इन्द्रियमिन्द्रलिङ्गम्” इत्यादिना इन्द्रशब्दात् तल्लिङ्गाद्यर्थे घप्रत्ययेन निपा-

र्त् पु० कुष्ठं हन्ति हन–टच् । १हस्तिकन्दे (हातिकान्दा) राजनि० २कृष्णनामके त्रि० ३बाकुच्यां स्त्री०ङीप् राजनि० [त्रिका० २कृष्णनामके त्रि०

**कुष्ठहृत्** पु० कुष्ठं हरति हृ–क्विप् तुक् च । १विट्खदिरे

**कुष्ठारि** पु० ६त० । १विट्खदिरे शब्दच० । २पटोले ३आदित्यपत्रे ४खदिरमात्रे ५गन्धके च राजनि० ६कुष्ठनाशके

**कुष्ठिका** स्त्री कुष्ठेव कायति कै–क । पादावयवभेदे "यास्ते अङ्गुाः याः कुष्ठिकाः ऋक्षराः ये च ते शफाः" अथ०१०८२१

**कुष्ठिन्** त्रि० कुष्ठ+अस्त्यर्थे इनि । कुष्ठरोगयुक्ते । कुष्ठशब्दे उदा० स्त्रियां ङीप्

**कुष्ठित** त्रि० कुष्ठं जातमस्य तार० इतच् । जातकुष्ठे "स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः । यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्" सुश्रुतः [उणा०

**कुष्मल** न० कुष–क्मलन् । १छेदने २छादने ३विकसिते च

**कुष्माण्ड** पु० ईषत् उष्मा पित्तहेतुत्वात् अण्डेषु बीजेषु यस्य शक०। (कुमड़ा) ख्याते १वृक्षे, २शिवस्य पारिषदभेदे च तस्य कुष्माण्डाकृतित्वात्तथात्वम् जातित्वात् स्त्रियां ङीप् कुष्माण्डोत्यप्यत्र ३लताभेदे स्त्री भावप्र० ऋग्वेदादिप्रसिद्धेषु ४ऋग्विशेषेषु स्त्री ५यद्देवा देवहेडनमित्यादिमन्त्रपञ्चकात्मकेऽनुवाके पु० "सूतस्य दशरात्रेण प्रायश्चित्तानि दापयेत् । साधितां रैवतीमिष्टिं कुष्माण्डमघमर्षणम्" भा० आनु० १२६अ० व्याख्याने नीलकण्ठः । यद्देवा इत्यादानुवाकश्च यजु० २०।१४।१७॥ यथा "यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः" यजु० २०।१४। यदि दिवा यदि नक्तमेनांसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः"१५ । यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः" १६ । यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये यदेनश्चकृमा वयम् । यदेकस्याधिधर्मणि तस्यावयजनमसि" १७ । "यदापो अघ्न्या इति वरुणेति नो मुञ्चत्वंहसः" १७॥ "इति सार्द्धचतुष्टयमन्त्रात्मकोऽनुवाकः तत्राद्यास्त्रिकः कुष्माण्डीसंज्ञा यथाह वेददी० "इत उत्तरमपञ्चय: माणवकं भावयति यद्देवा इति" का० ११५।१३। अवभृथेष्टिं कृत्वा यद्देवा इत्यादिना वरुणो को इत्यन्तेन सार्द्धकण्डिकाचतुष्कात्मकेन मन्त्रेण माणवकं जले तारयति । अग्निवायुसूर्यदेवत्यास्त्रयोऽनुवाः कुष्माण्डीसंज्ञाः" इति । तेनार्षशिष्टसार्द्धमन्त्रसहितोऽनुवाकः कुष्माण्डसंज्ञक इति विवेच्यम् भारतभारतव्याख्याने नीलकण्ठेन मन्त्रपञ्चात्मकस्य तथात्वोक्तिः अर्द्धमन्त्रस्य मन्त्रत्वकल्पनयेति बोध्यम् । स्वार्थे क कुष्माण्डकोऽपि (कुमड़ा) इत्थे ओषधिभेदे, उमायां, (नसिना) कर्कारौ च । कुष्माण्डस्य गुणपाकप्रकारादि भावप्र० उक्तं "कुष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातनुत् । बालं पित्तापहं शीतं मध्यमं कफकारकम् । वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु । वस्तिशुद्धिकरं चेतोरोगहृत् सर्वदोषजित् । अस्य पाककप्रकाराः यथा "घृते तप्ते विनिःक्षिप्य खण्डान् कुष्माण्डसम्भवान् । वार्त्ताकुविधिना कुर्यात् प्रलेहतलनादिकम् । वेसवाराद्धतक्रेण घृते तलनपूर्वकम् । कुष्माण्डकं फलं सिद्धं विदुः सुखादु सुन्दरम्" । "घृतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान् । रञ्जितान् जीरमरिचैरिमान् सुमुखिकां विदुः" "चतुरस्त्रायतान् स्थूलान् खिन्नान् चीरेण चोदितान् । सुपाच्यान् खण्डसर्पिर्भ्यां मरिचैलादिवासितान्" । "कुष्माण्डखण्डानि सशैब्याणि तनूनि सर्ल्पिर्द्दतपिण्डितानि । जम्बीरनीराञ्चितशुङ्करैर्भवन्ति वक्त्रेरपि पोषणाय" । "कुष्माण्डसम्भवाः खण्डाः सुखिन्नाश्चणकान्विताः । वेसवारयुते तैले तलयेद्वा प्रलेहयेत् । खण्डं कनिष्ठिकाकारं कौष्माण्डं स्वेदपिण्डितम् । राजिकादधिसिन्धूत्थैर्भिश्रितं कात्तूरीयकम् । एवं वहुविधाः कार्याः कौष्माण्डा हि विचक्षणैः । प्रलेहतलनस्तादुत्तारसन्धानराजिकाः" । "अमृतं पक्वकुष्माण्डं कुष्माण्डं तरुणं विषम्"... "कुष्माण्डे चार्थहानिः स्यात्" तिथितत्व० । अलाबूं चैव कुष्माण्डं कार्त्तिके परिवर्ज्जयेत्, कार्त्तिकव्रते पुरा०। ६ यागक्रियाविशेषे शब्दरत्ना० तत्रार्थं कन्यस्

[illegible] **कुष्माण्डरसायन** न० चक्रदत्तोक्ते कुष्माण्डस्य द्रव्यान्तर[illegible]स्य पाकविशेषेण जाते औषधभेदे यथा [illegible]माण्डकात् पलशतं सुखिन्नं निष्कुलीकृतम् । पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढे । यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत् । पिप्पलीशृङ्गबेराभ्यां द्वे पले जीरकस्य च । त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम् । न्यसेच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेन्मुहुः । तत् पक्वं स्थापयेद्भाण्डे दत्त्वा चौद्रं घृतार्द्धकम् । तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी । कासश्वासतमश्छर्दि तृष्णाज्वरनिपीड़ितः । वृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ।